हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

९९

कर्मकाण्डविभागे(६)षष्ठं पुष्पम् ।

# अन्त्यकर्मदीपकः

आशौचकालनिर्णयसहितः ।

प्रेतकर्मब्रह्मीभूतयतिकर्मनिरूपणात्मकः ।

प्रकाशकः—

जयकृष्णदास–हरिदासगुप्तः—

चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस,

गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८५

THE

# KASHI-SANSKRIT-SERIES

( *HARIDAS SANSKRIT GRANTHAMĀLĀ* )

## NO. 66.

( Karma Kāṇḍa Section, No. 6 )

# ANTYA KARMA DĪPAKA

With

ĀS'AUCHA KĀLA NIRṆAYA.

PRETAKARMA AND BRAHMĪBHUTA YATI KARMA NIRŪPAṆA.

By

*Mahamahopadhyaya*

*Pandita Nityananda Panta Parvatiya.*

PRINTED, PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series office, Vidya Vilas Press,*

*North of Gopalmandir, Benares City.*

1928.

Printed-Published & sold by
JAI KRISHNADAS-HARIDAS GUPTA,
The Chowkhamba Sanskrit Series Office,
VIDYA VILAS PRESS,
North of Gopal Mandir,
BENARES CITY.

*Printed by Jai Krishna Das Gupta
at the Vidya Vilas Press, Benares,*

Agents:

1 Otto Harrassowitz, Leipzig:
GERMANY.

2 Arthur Probsthain,
Oriental & Foreign Bookseller,
London.

3 The Oriental Book-supplying Agency,
POONA.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

६६

कर्मकाण्डविभागे(६)षष्ठं पुष्पम् ।



# अन्त्यकर्मदीपकः

आशौचकालनिर्णयसहितः ।

प्रेतकर्मब्रह्मीभूतयतिकर्मनिरूपणात्मकः ।

महामहोपाध्याय पं० नित्यानन्दपर्वतीयविरचितः ।

प्रकाशकः—

जयकृष्णदास—हरिदासगुप्तः—

चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस,

गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८५

## अन्त्यकर्मदीपकस्य विषयानुक्रमः ।

# अथान्त्यकर्मदीपकोत्तरार्धविषयानुक्रमः ।



श्रीगणेशाय नमः । श्रीसद्गुरवे नमः ।

# अन्त्यकर्मदीपकः ।

सर्वस्फूर्तिविधातारं सर्वविघ्नविनाशनम् ।
सर्वाभीष्टप्रदातारं सद्गुरुं प्रणमाम्यहम् ॥ १ ॥
पर्वतीयेन पन्तेन नित्यानन्देन धीमता ।
क्रियते बालबोधार्थमन्त्यकर्मप्रदीपकः ॥ २ ॥

तत्र तावत्—

आधान-पुंस-सीमन्त-जात-नामा-न्न-चौलकाः ।
मौञ्जी व्रतानि गोदान-समावर्त-विवाहकाः ॥ (व्रतानिचत्वारि)
अन्त्यञ्चैतानि कर्माणि प्रोच्यन्ते षोडशैव तु ।

इति जातूकर्ण्येन अन्त्यसंस्कारस्यापि षोडशसंस्कारेषु परिगणनात्,

ब्रह्मक्षत्रविशः शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥

इति याज्ञवल्क्येन गर्भाधानादिसंस्कारेषु अन्त्यत्वेन श्मशानकर्मण उक्तेः तस्याऽपि गर्भाधानादिसंस्कारघटकत्वकथनाच्च समावर्तनान्तसंस्कारेषु सप्रयोगेषु निरूपितेषु अन्त्यसंस्कारस्यापि निरूपणावश्यकत्वात् अन्त्यकर्म सप्रयोगं निरूप्यते ।

तत्रादौ प्रसङ्गात् मुमूर्षुकृत्यं निरूप्यते ।

आसन्नमरणं पित्रादिकं ज्ञात्वा पुत्रादयस्तीर्थं (१) नीत्वा

---

(१) तीर्थप्रकाशे दानधर्मे—

भाद्रकृष्णचतुर्दश्यां यावदाक्रमते जलम् ।
तावद् गर्भं विजानीयात्तदन्यत्तीरमुच्यते ॥

व्रतोद्यापनसर्वप्रायश्चित्तदशदानादि कारयेयुः, स्वयं वा तदन्वारब्धाः कुर्युः ।

(१)तत्रादौ व्रतोद्यापनानुकल्पः ।

---

ब्रह्माण्डे—

सार्धहस्तशतं यावत् गर्भतस्तीरमुच्यते ।
अत्र न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि ॥
तीराद्गव्यूतिमात्रंतु परितः क्षेत्रमुच्यते ।
अत्र दानं तपो होमो गङ्गायां नात्र संशयः ॥
अत्रस्थास्तु दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।

भविष्ये —

एकयोजनविस्तीर्णा क्षेत्रसीमा तटद्वयात् ।
अत्र दत्तं हुतं जप्तं कोटिकोटिगुणं भवेत् ॥ इति ।

नारदीये—

किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः ।
वास एव हि गङ्गायां ब्रह्मज्ञानस्य कारणम् ॥

स्कान्दे—

गङ्गायां मरणान्मुक्तिर्नात्र कार्या विचारणा ।
परब्रह्मस्वरूपिण्यामित्याह जगतां प्रभुः ॥
गङ्गायां त्यजतः प्राणान् कथयामि वरानने ।
कर्णे तत् परमं ब्रह्म, ददामि मामकं पदम् ॥

ब्रह्मपुराणे—

ज्ञानतोऽज्ञानतो वाऽपि कामतोऽकामतोऽपिवा ।
गङ्गायां च मृतो मर्त्यः स्वर्गं मोक्षं च विन्दति ॥

शुद्धितत्त्वे कूर्मपुराणे—

गङ्गायां च जले मोक्षो वाराणस्यां जले स्थले ।
जले स्थलेचान्तरिक्षे गङ्गासागरसंगमे ॥

( १ ) निर्णयसिन्धौ पृथ्वीचन्द्रोदये नन्दिपुराणे—
कुर्यादुद्यापनं तस्य समाप्तौ यदुदीरितम् ।
उद्यापनं विना यत्तु तद् व्रतं निष्फलं भवेत् ॥

प्रथमं ब्राह्मणमाहूय स्नानेन मार्जनेन गङ्गाजलप्राशनादिना वा रोगिणः शुद्धिं विधाय पुत्रादिः स्वयमपि कृतवपनस्नानादिर्निसर्कर्म कृत्वा दीपं प्रज्वाल्याचम्य गणेशं नमस्कृत्य शुक्लाम्बरधरमिति विष्णुं प्रार्थ्य यवतिलकुशजलगन्धाक्षतपुष्पैः कर्मपात्रं सम्पाद्य सुवर्णादिद्रव्यं पुरतः संस्थाप्य ॐ देयद्रव्याय नमः हिरण्यगर्भगर्भस्थमिति गन्धपुष्पाक्षतैः सम्पूज्य

---

यदि चोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् ।
वित्तानुसारतो दद्यात् अनुक्तोद्यापने व्रते ॥
गां चैव काञ्चनं दद्यात् व्रतस्य परिपूर्तये । इति ।

व्रतानुगुणतश्चरेत् इत्यस्य यत्र व्रते या देवता तां सर्वतोभद्रमण्डले सर्वतोभद्रमण्डलदेवतानां स्थापनं कृत्वा यथाविधि स्थापिते कुम्भे अधिवास्य तद्देवताको होमः कार्यः,

रुद्रव्रते तु लिङ्गतोभद्रमण्डले मण्डलदेवतास्थापनं कृत्वा कुम्भे रुद्रदेवतामधिवास्य तद्देवताको होमः, अन्ते शय्यादानादिकं कुर्यात् इत्यर्थः ।

अशक्तौ तु नारदीये--

सर्वेषामप्यलाभे तु यथोक्तकरणं विना ।
विप्रवाक्यं स्मृतं शुद्धं व्रतस्य परिपूर्तये ॥
वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभम् ।
अदत्त्वा दक्षिणां पापः स याति नरकं ध्रुवम् ॥
भारते--वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ।
सर्वत्र तु मयोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥ इति ।

सर्वेषामुद्यापनवस्तूनाम् अलाभे व्रतपरिपूर्त्यर्थं विप्रवाक्यश्रवणं दक्षिणादानपूर्वकं कर्तव्यमिति । दक्षिणा च भूमिरूपा गोरूपा काञ्चनरूपा च । तत्र काञ्चनदक्षिणादानरूपव्रतोद्यापनानुकल्पः सौकर्यादत्रोपदिश्यते । यद्यपि प्रतिव्रतं तदुद्यापनानुकल्पतया सुवर्णदानं पृथक् पृथक् अनुष्ठातुमुचितं तथापि अशक्तस्य सर्वव्रतोद्यापनानुकल्पतया सकृत्तदनुष्ठानम् आवश्यकम् इत्यभिप्रेत्य सर्वव्रतोद्यापनानुकल्पतया तदनुष्ठानप्रकार उपदिश्यते ।

हस्ते कर्मपात्रतः कुशतिलजलान्यादाय ॐविष्णुर्विष्णुर्विष्णुः नमः परमात्मने श्रीपुराणपुरुषोत्तमाय ॐतत्सत् अत्र पृथिव्यां जम्बूद्वीपे भरतखण्डे आर्यावर्तैकदेशे ( अविमुक्तवाराणसीक्षेत्रे महाश्मशाने आनन्दकानने गौरीमुखे त्रिकण्टकविराजिते भागीरथ्याः पश्चिमे तीरे ) विष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणो द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे विक्रमशके बौद्धावतारे षष्टिसंवत्सराणां मध्ये अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते चन्द्रमसि अमुकराशिस्थिते देवगुरौ अमुकवासरान्वितायाममुकतिथौ अमुकगोत्रः अमुकराशिरमुकशर्मा अहं ममात्मनः (ममपित्रादेः) व्रतग्रहणदिवसादारभ्य अद्य यावत् फलाभिलाषादिगृहीतानां निष्कामतया गृहीतानां च अमुकामुकव्रतानाम् अकृतोद्यापनदोषपरिहारार्थं श्रुतिस्मृतिपुराणोक्ततत्तद्व्रतजन्यसाङ्गफलप्राप्त्यर्थं विष्ण्वादीनां तत्तद्देवानां प्रीतये इदं सुवर्णमग्निदैवतम् (तदभावे इदं रजतं चन्द्रदैवतम् ) अमुकगोत्रायामुकशर्मणे ब्राह्मणाय दास्ये ॐतत्सन्न मम, इति सङ्कल्प्य ब्राह्मणं नमो ब्रह्मण्यदेवायेत्यादिना सम्पूज्य हिरण्यगर्भगर्भस्थमिति मन्त्रं पठन् इदं सुवर्णं ( रजतं ) तुभ्यमहं सम्प्रददे इति दद्यात् । ब्राह्मणं प्रणम्य यस्यस्मृत्येति पठेत् । ब्राह्मणश्च सर्वाणि व्रतानि परिपूर्णानि सन्तु उद्यापनफलावाप्तिरस्तु इति वदेत् । ( अस्य दक्षिणादानरूपत्वान्न दानप्रतिष्ठासिद्ध्यर्थं दक्षिणान्तरदानमिति बोध्यम् ) ।

अथ सर्वप्रायश्चित्तम् ।

धर्मशास्त्रज्ञं ब्राह्मणमाहूय सम्पूज्य सर्वप्रायश्चित्तानुज्ञां प्रा-

र्थं परिशिष्टदीपकोक्तरीत्या (पृ० १४२) पडब्दत्र्यब्दसार्धाब्दा-
न्यतमकृच्छ्रप्रायश्चित्तं कुर्यात् ।

तदसम्भवे धर्मशास्त्रज्ञसम्मत्या सर्वप्रायश्चित्तानुकल्पं गो-
दानं कुर्यात् ।

आतुरः तत्पुत्रादिर्वा कृतवपनस्नानादिः सति सम्भवे प-
ञ्चगव्यं प्राश्य गां तन्निष्क्रयद्रव्यं वा पुरतः संस्थाप्य ब्राह्मणं
गन्धादिभिः सम्पूज्य गां तन्निष्क्रयद्रव्यं वा सम्पूज्य हस्ते
कुशतिलयवजलान्यादाय ॐविष्णुः३ इत्यादिदेशकालौ सङ्कीर्त्य
मम (मत्पित्रादेर्वा) ज्ञाताज्ञातकामाकामसकृदसकृत्कृतकायिकवा-
चिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातका-
नुपातकोपपातकलघुपातकसङ्करीकरणमलिनीकरणापात्रीकरण-
जातिभ्रंशकरप्रकीर्णकादिनानाविधपातकानां निरासेन देहाव-
सानकाले देहशुद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् इमां सर्वप्राय-
श्चित्तप्रत्याम्नायभूतां यथाशक्त्यलङ्कृतां सवत्सां गां रुद्रदै-
वताम् अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे
ॐतत्सन्न मम ।

यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी ।
विश्वरूपधरो देवः प्रीयतामनया गवा ॥
प्रायश्चित्ते समुत्पन्ने निष्कृतिर्न कृता यदि ।
तस्य पापस्य शुद्ध्यर्थं धेनुमेतां ददामि ते ॥

इति पठित्वा दद्यात् । गोरभावे तन्निष्क्रयद्रव्यं—

यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी ।
अस्या मूल्यप्रदानेन प्रीयतां विश्वरूपधृत् ॥
प्रायश्चित्ते समुत्पन्ने निष्कृतिर्न कृता यदि ।
तस्य पापस्य शुद्ध्यर्थं धेनुमूल्यं ददामि ते ॥

इति पठित्वा दद्यात् । ब्राह्मणः देवस्यत्वेति प्रतिगृह्य कामस्तुतिं पठेत् ।

सर्वप्रायश्चित्तमपि सङ्क्षेपेण चिकीर्षुः श्रीपरमेश्वरप्रीत्यर्थमित्यन्तं पूर्ववाक्यमुल्लिख्य इमानि अशीत्यधिकशतसङ्ख्याकानि, नवति सङ्ख्याकानि, पञ्चचत्वारिंशत्सङ्ख्याकानि वा (सुवर्ण-खण्डानि वह्निदैवतानि) रजतखण्डानि चन्द्रदैवतानि विभज्य नानानामगोत्रेभ्यो ब्राह्मणेभ्यो यथाकालं दास्य इति सङ्कल्प्य मूल्यदानविधिना दद्यात् । कृतैतत्सर्वप्रायश्चित्तप्रत्या-म्नायगोदानप्रतिष्ठासिद्ध्यर्थं तन्मूल्यदानप्रतिष्ठासिद्ध्यर्थं वा ब्रा-ह्मणाय ब्राह्मणेभ्यो वा दास्य इति सङ्कल्प्य दत्त्वा यस्यस्मृ-त्येति पठेत् ।

इत्थं सर्वप्रायश्चित्तं कृत्वा विष्णुप्रीतये चतुरो ब्राह्मणान् सम्पूज्य तेभ्यो भोजनमामान्नं तन्मूल्यद्रव्यं वा दद्यात् ।

ततो दश दानानि दद्यात् ।

(तानि च—

उत्क्रान्त्यादीनि दानानि दश दद्यात् मृतस्य तु ।
गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ।
रौप्यं लवणमित्याहुर्दश दानान्यनुक्रमात् ॥
एतानि दशदानानि नराणां मृत्युजन्मनोः ।
कुर्यादभ्युदयार्थं तु प्रेते ऽपि हि परत्र वै ॥
इति निर्णयसिन्धौ जातूकर्ण्येनोक्तानि ।

तत्रैव ब्राह्मे—

ताम्रपात्रं तिलैः पूर्णं प्रस्थपात्रं द्विजाय तु ।
सहिरण्यं च यो दद्यात् श्रद्धावित्तानुसारतः ॥

सर्वपापविशुद्धात्मा लभते गतिमुत्तमाम्।
उत्क्रान्तिवैतरण्यौ च दशदानानि चैव हि॥
प्रेतेऽपि कृत्वा तं प्रेतं शवधर्मेण दाहयेत्।

तत्रैव परिशिष्टे—

म्रियमाणस्य कर्णे तु पुण्यमन्त्रान् जपेन्नरः। इति।

अन्यान्यपि शालग्रामशिलादानादीनि निर्णयसिन्धावुक्तानि। एतानि च मुमूर्षुणा अवश्यं पुत्रादिः कारयेत् इत्युक्तं तत्रैव—

दृष्ट्वाऽऽस्थानस्थमासन्नमर्धोन्मीलितलोचनम्।
भूमिष्ठं पितरं पुत्रो यदि दानं प्रदापयेत्॥
तद् विशिष्टं गयाश्राद्धादश्वमेधशतादपि।
मोक्षन्देहि हृषीकेश मोक्षं देहि जनार्दन।
मोक्षधेनुप्रदानेन मुकुन्दः प्रीयतां मम॥
ऐहिकामुष्मिकं यच्च सप्तजन्मार्जितं त्वृणम्।
तत्सर्वं शुद्धिमायातु गामेतां ददतो मम॥
आजन्मोपार्जितं पापं मनोवाक्कायकर्मभिः।
तत्सर्वं नाशमायातु गोप्रदानेन केशव॥

तत्रैव भारते—

शुक्लपक्षे दिवा भूमौ गङ्गायां चोत्तरायणे।
धन्यास्तात मरिष्यन्ति हृदयस्थे जनार्दने॥

व्यासः—

आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत्।
तदभावे तु गौरेव नरकोत्तारणाय वै॥
तदा यदि न शक्नोति दातुं वैतरणीं तु गाम्।
शक्तोऽन्योऽरुक् तदा दत्त्वा दद्याच्छ्रेयो मृतस्य तु॥इति।)

आचम्य हस्ते जलादिकं गृहीत्वा ॐअद्येह मम ( मत्पित्रादेः) सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थममुकदानमहं करिष्ये, तदङ्गतया अमुकदेयवस्तुनस्तत्प्रतिग्रहीतुर्ब्राह्मणस्य च पूजनमहं करिष्ये, इति सङ्कल्प्य पूर्वं यथाशक्त्यलङ्कृतां गां पुरतः संस्थाप्य गन्धाक्षतपुष्पादिभिः--

ॐ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥

इति सम्पूज्य,

गोरभावे मूल्यं पुरतः संस्थाप्य हिरण्यगर्भगर्भस्थमिति सम्पूज्य ब्राह्मणं च नमोऽस्त्वनन्तायेति सम्पूज्य तिलकुशादियुतं जलं गृहीत्वा ॐविष्णुः ३ देशकालौ सङ्कीर्त्य अमुकगोत्रः० मम ( पित्रादेः ) आजन्मकृतसकलदुरितोपशमनद्वारा श्रीनारायणप्रीतये यथाशक्त्यलङ्कृतां गाम् ( मूल्यदानपक्षे गोनिष्क्रयीभूतमिदं द्रव्यममुकदैवतम् ) अमुकगोत्राय ब्राह्मणाय सम्प्रददे ॐ तत्सन्न मम । यज्ञसाधनभूता या० इति पूर्वोक्तं वाक्यं तथा

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
तस्मादस्याः प्रदानेन प्रीयतां मे जनार्दनः ॥

इति पठन् दद्यात् ।

( गोमूल्यदानपक्षे

अस्या मूल्यप्रदानेन प्रीयतां मे जनार्दनः इत्युभयत्रोह्यम् )
ब्राह्मणश्च स्वस्तीति वदेत् ।

कृतैतद्भूदानप्रतिष्ठासिद्ध्यर्थमिदं द्रव्यममुकदैवतममुकगोत्राय०

अथ भूमिदानम्* ।

देयभूमिसम्बन्धि मृत्पिण्डं तदभावे अक्षतपुञ्जादिकं पुरतः

---

* देयभूम्यादीनां परिमाणं दानकमलाकरे शातातपीये कर्मविपाके—

निवर्तनमिता भूमिर्द्रोणद्वयमितास्तिलाः ।
कर्षमात्रं सुवर्णं स्यादाज्यं सप्रस्थमाढकम् ॥
वाससो द्वितयं दद्याद् गुडं च पलषष्टिकम् ।
निष्कत्रयमितं रौप्यं लवणं सार्धखारिकम् ॥
सार्धखारीद्वयं व्रीहिः दशदानप्रमाणकम् ।

मिताक्षराटीकायां पुराणान्तरे (४८४ पृ०)—

भूमिरश्वो यथाशक्ति तिलद्रोणोद्वयं तथा ।
गौः सुशीला च दोग्ध्री च कुम्भैराज्यं च पञ्चभिः ॥
पलमेकं तु रौप्यस्य सुवर्णस्य सुवर्णकः ।

सुवर्णकः कर्षः ।

दशवस्त्रैर्महादानं दातव्यं च मुमुक्षुणा ॥
यथाशक्तीत्यस्य सर्वत्र सम्बन्धः ।

तत्रैव मदनरत्ने-भूपरिमाणं च उत्तमपक्षे गोचर्म । गोचर्मलक्षणं तु

"दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्तनम् ।

दश तान्येव गोचर्म" इत्युक्तम् । मध्यमपक्षे समन्ततो दश हस्ताः । अधमपक्षे समन्ततः पञ्च हस्ताः । निष्कमात्रं सुवर्णं भूमिदानप्रतिष्ठासिद्ध्यर्थं दक्षिणा ।

द्रोणमात्रतिलदानम् । द्रोणपरिमाणंच—
पलं च कुडवः प्रस्थ आढको द्रोण एवच ।
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥

इति परिभाषया—

"पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तिताः ।

इति परिभाषया च षोडश सेटकाः, पलाधिकपादोनत्रयोदशसेटका वा ।

संस्थाप्य ( मूल्यदानं चिकीर्षुः तन्मूल्यं पुरतो निधाय ) पूर्व-वत् भूमिदानं करिष्ये तदङ्गत्वेन भूमिपूजनं ब्राह्मणपूजनं च करिष्ये इति प्रतिज्ञाय भूम्यै नमः इति गन्धाक्षतादिभिः भूमिं सं० ब्राह्मणं च पूर्ववत् सम्पूज्य हस्ते जलादिकमादाय अद्येह मम (पित्रादेः) सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं दानखण्डोक्त-फलावाप्तये च इमां भूमिममुकपरिमाणां विष्णुदैवताम् ( मूल्य-दानपक्षे अमुकद्रव्यममुकदैवतम् ) अमुकगोत्राय ब्राह्मणाय०

सर्वभूताश्रया भूमिर्वराहेण समुद्धृता ।
अनन्तसस्यफलदा ह्यतः शान्तिं प्रयच्छ मे ॥
यथा भूमिप्रदानस्य कलां नार्हन्ति षोडशीम् ।
दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवत्विह ॥ इति पठन् द०

मूल्यदानपक्षे—

यतो भूमिप्रदानस्य कलां नार्हन्ति षोडशीम् ।
दानान्यन्यानि मे शान्तिर्भूयाद् भूमूल्यदानतः ॥

इति पठन् दद्यात् । ब्राह्मणः स्वस्तीति वदेत् । कृतैतद्भू-मिदानप्रतिष्ठासिद्ध्यर्थमिदं द्रव्यममुकदैवतममुकगोत्राय० ।

---

तिलदानं तिलपात्रदानम् इति केचित् । पात्रमानं च षोडश पलानि । एतद्दक्षिणा माषचतुष्टयं सुवर्णम् । ( पञ्चरक्तिको माषः )

हिरण्यप्रमाणमेकस्तोलकः । तावत्येव दक्षिणा ।

आज्यप्रमाणं तु उत्तमपक्षे षष्टिपलानि ६०, मध्यमपक्षे चत्वारिं-शत् ४०, अधमपक्षे द्वादश १२। दक्षिणा सुवर्णमाषाश्चत्वारः । लवणं च आज्यतुल्यम् ।

गुडो द्विगुण आज्यात् । दक्षिणा आज्यवदेव ।

धान्यं पञ्चद्रोणमितम् । दक्षिणा यथाशक्ति ।

रजतं निष्कप्रमाणम् । निष्कमानं तु "निष्कं सुवर्णाश्चत्वारः" इति परिभाषितम् । कर्षचतुष्टयमितं रजतमित्यर्थः ।

अथ तिलदानम् ।

द्रोणद्वयमितान् ( एकादशपलाधिक २९ सेटकमितान् ), द्रोणपरिमितान् ( पलाधिकपादोनत्रयोदशसेटकमितान् ), यथाशक्ति वा तिलान् तन्मूल्यं वा पुरतः संस्थाप्य पूर्ववत् प्रतिज्ञासङ्कल्पं कृत्वा गन्धादिभिः तिलेभ्यो नमः—

विष्णोर्देहसमुद्भूताः कुशाः कृष्णतिलास्तथा ।
धर्मस्य रक्षणायालमेतत्प्राहुर्दिवौकसः ॥

इति सम्पूज्य ब्राह्मणं च पूर्ववत् सम्पूज्य कुशादिकमादाय ॐ अद्येह मम ( पित्रादेः ) आजन्मकृतैनसो निबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थमिमांस्तिलान् प्रजापतिदैवतान् ( तन्मूल्यद्रव्यममुकदैवतम् ) अमुकगोत्राय सुपूजिताय ब्राह्मणाय०

महर्षेर्गात्रसम्भूताः कश्यपस्य तिलाः स्मृताः ।
तस्मादेषां प्रदानेन मम पापं व्यपोहतु ॥ इति पठन्०

मूल्यदानपक्षे—पूर्वार्धं पूर्ववत् पठित्वा—
एषां मूल्यप्रदानेन मम पापं व्यपोहतु ॥

इत्युत्तरार्धम् पठन् दद्यात् । ब्राह्मणः स्वस्तीति वदेत् । कृतैतत्तिलदानप्रतिष्ठासिद्ध्यर्थमिदं द्रव्यममुकदैवतममुकगोत्राय०

अथ सुवर्णदानम् ।

कर्षमात्रं यथाशक्ति वा सुवर्णं तन्मूल्यद्रव्यं वा पुरतः संस्थाप्य पूर्ववत् प्रतिज्ञासङ्कल्पं कृत्वा—

हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

इति सम्पूज्य ब्राह्मणं च सम्पूज्य कुशादिकं गृहीत्वा देशकालौ सङ्कीर्त्य मम ( पित्रादेः ) आजन्मकृतैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीतये इदं सुवर्णं वह्निदैवतं ( मूल्यद्रव्यममुकदैवतम् )

अमुकगोत्राय० हिरण्यगर्भगर्भस्थमिति पठन् दद्यात् । ब्राह्मणः स्वस्तीति ब्रूयात् । कृतैतत्सुवर्णदानप्रतिष्ठासिद्ध्यर्थमिदं द्रव्यममुकगोत्राय०

अथाज्यदानम् ।

सेटकचतुष्टयमितं, सार्धसेटकद्वयमितं, पादोनसेटकमात्रं वा आज्यं ( तन्मूल्यद्रव्यं वा ) पुरतो निधाय पूर्ववत् प्रतिज्ञां कृत्वा आज्याय नमः इति घृतं ब्राह्मणं च पूर्ववत्सम्पूज्य कुशादिकं गृहीत्वा अद्येह मम ( पित्रादेः ) सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीतये मृत्युञ्जयदैवतमिदमाज्यम् (मूल्यदानपक्षे अमुकद्रव्यममुकदैवतम्) अमुकगोत्राय०

कामधेनोः समुद्भूतं सर्वक्रतुषु संस्थितम् ।
देवानामाज्यमाहारस्ततः शान्तिं प्रयच्छ मे ॥ इति पठन्०
मूल्यदानपक्षे पूर्वार्धं पूर्ववत्पठित्वा—
देवानामाज्यमाहारो मूल्यदानात्सुखाय मे ॥

इत्युत्तरार्धं पठन् दद्यात् । ब्राह्मणः स्वस्तीति वदेत् । ततो दानप्रतिष्ठां दद्यात् ।

अथ वस्त्रदानम् ।

सूक्ष्मतन्तुनिर्मितमष्टहस्तायतं हस्तद्वयादन्यूनविशालं प्रान्तयोराच्छिन्नं नूतनं वस्त्रद्वयं तन्मूल्यद्रव्यं वा पुरतो निधाय पूर्ववत् प्रतिज्ञां वस्त्रब्राह्मणपूजनादि च विधाय कुशादिकं गृहीत्वा अद्येह मम ( पित्रादेः ) सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीतये इदं वस्त्रद्वयं बृहस्पतिदैवतम् (मू० अमुकद्रव्यममुकदैवतम् ) अमुकगोत्राय०

शीतवातातपत्राणं लज्जाया रक्षणं परम् ।
देहालङ्करणं वस्त्रमतः शान्तिं प्रयच्छ मे ॥ इति पठन्०

( मूल्ये तु पूर्वार्धं पूर्ववत् पठित्वा—

देहालङ्करणं वस्त्रं मूल्यदानात्सुखाय मे ॥

इत्युत्तरार्धं) पठन् दद्यात् । ब्राह्मणः स्वस्तीति० । दानप्रतिष्ठां दद्यात् ।

अथ धान्यदानम् ।

षष्ट्युत्तरशत(१६०)सेटकमितम्, अष्टाविंशत्युत्तरशत(१२८) सेटकमितम् , अशीति(८०)सेटकमितं, चतुःषष्टि(६४)सेटकमितं, यथाशक्ति वा व्रीह्यादिरूपं धान्यं, तन्मूल्यं वा पुरतः संस्थाप्य प्रतिज्ञापूजनादिकं पूर्ववत्कृत्वा कुशजलादि गृहीत्वा अद्येह मम (पित्रादेः) समस्तपातकक्षयद्वारा श्रीपरमेश्वरप्रीतये इदं धान्यं प्रजापतिदैवतं (मूल्यममुकदैवतं) अमुकगोत्राय०

सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् ।

प्राणिनां जीवनोपायमतः शान्तिं प्रयच्छ मे ॥ इति पठन्०

( मूल्यपक्षे पूर्वार्धं पूर्ववत्पठित्वा—

प्राणिनां जीवनं मूल्यदानाच्छान्तिं प्रयच्छतु ॥

इत्युत्तरार्धं ) पठन् दद्यात् । ब्राह्मणः स्वस्तीति० । ततो दानप्रतिष्ठां दद्यात् ।

अथ गुडदानम् ।

अष्टसेटकमितं, सेटकत्रयमितं, यथाशक्ति वा गुडं तन्मूल्यद्रव्यं वा पुरतो निधाय प्रतिज्ञापूजनादिकं पूर्ववत्कृत्वा कुशजलादिकं गृहीत्वा अद्येह मम ( पित्रादेः ) सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं गुडं सोमदैवतं ( तन्मूल्यममुकदैवतम् ) अमुकगोत्राय०

यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः ।

सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥

प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥
मम तस्मात्परां शान्तिं ददस्व गुड सर्वदा । इति पठन्०
( मूल्यपक्षे० सर्वं पूर्ववत्पठित्वा—
मूल्यदानादतः शान्तिं ददस्व गुड सर्वदा ॥
इति अन्तिमार्धं ) पठन् दद्यात् । ब्राह्मणः स्वस्तीति० ।
ततो दानप्रतिष्ठां दद्यात् ।

अथ रजतदानम् ।

पलत्रयमितं यथाशक्ति वा रजतं पुरतः संस्थाप्य प्रतिज्ञादिकं पूर्ववत्कृत्वा अद्येह मम ( पित्रादेः ) सकलपापक्षयपूर्वकश्रीपरमेश्वरप्रीतये इदं रजतं चन्द्रदैवतममुकगोत्राय०

प्रीतिर्यतः पितॄणां च विष्णुशङ्करयोः सदा ।
शिवनेत्रोद्भवं रौप्यमतः शान्तिं प्रयच्छ मे ॥

इति पठन् दद्यात् ।
ब्राह्मणः स्वस्तीति० । ततो दानप्रतिष्ठां दद्यात् ।

अथ लवणदानम् ।

षोडशपलाधिकषट्सप्ततिसेटकमितं, सेटकचतुष्टयमितं, यथाशक्ति वा तन्मूल्यद्रव्यं वा पुरतो निधाय प्रतिज्ञापूजनादिकं पूर्ववद्विधाय हस्ते कुशादिकं गृहीत्वा देशकालौ सङ्कीर्त्य मम ( पित्रादेः ) सकलपापक्षयपूर्वकश्रीपरमेश्वरप्रीत्यर्थमिदं लवणं सोमदैवतम् ( मूल्यद्रव्यममुकदैवतम् ) अमुकगोत्राय०

यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना ।
शम्भोः प्रीतिकरं यस्मादतः शान्तिं प्रयच्छ मे ॥ इति पठन्०
( मूल्यपक्षे—पूर्वार्धं पूर्ववत्पठित्वा—
शम्भोः प्रीतिकरं मूल्यदानाच्छान्तिं प्रयच्छतु ।

इत्युत्तरार्धं ) पठन् दद्यात्। ब्राह्मणः स्वस्तीति०। ततो दानप्रतिष्ठां दद्यात्। इति दश दानानि।

अथ ऋणधेनुदानम्।

गां तन्निष्क्रयद्रव्यं वा पुरतो निधाय प्रतिज्ञापूजादिकं पूर्ववत्कृत्वा देशकालौ सङ्कीर्त्य मम ( पित्रादेः ) ऐहिकामुष्मिकानेकजन्मार्जितदेवर्षिपितृमनुष्यादिसमस्तर्णपापक्षयद्वारा श्रीविष्णुप्रीतये इमाम् ऋणापनोदधेनुं रुद्रदैवताम् ( इदमृणापनोदधेनुमूल्यममुकदैवतम् ) अमुकगोत्राय ब्राह्मणाय०

ऐहिकामुष्मिकं यच्च सप्तजन्मार्जितं त्वृणम्।
तत्सर्वं शुद्धिमायातु गामेतां ददतो मम॥ इति,

( मूल्यपक्षे "गोमूल्यं ददतो मम" इत्यन्त्यपादं परिवर्त्य ) पठन् दद्यात्। ब्राह्मणः स्वस्तीति०। ततो दानप्रतिष्ठां दद्यात्।

अथ पापापनोदधेनुदानम्।

श्वेतां गां निष्क्रयद्रव्यं वा पुरतो निधाय प्रतिज्ञापूजनादिकं पूर्ववत्कृत्वा कुशजलादि गृहीत्वा देशकालौ सङ्कीर्त्य मम ( पित्रादेः ) ज्ञाताज्ञातमनोवाक्कायकृतसकलपापक्षयद्वारा श्रीपरमेश्वरप्रीतये इमां पापापनोदधेनुं रुद्रदैवतां निष्क्रयद्रव्यममुकदैवतम् ) अमुकगोत्राय ब्राह्मणाय०

आजन्मोपार्जितं पापं मनोवाक्कायसम्भवम्।
तत्सर्वं नाशमायातु गोप्रदानेन केशव॥ इति पठन्०

( मूल्यपक्षे "गोमूल्यदानात्तत्सर्वं नाशमायातु केशव"। इत्युत्तरार्धं परिकल्प्य ) पठन् दद्यात्। ब्राह्मणः स्वस्तीति०। ततो दानप्रतिष्ठां दद्यात्।

अथ मोक्षधेनुदानम्।

गां निष्क्रयद्रव्यं वा पुरतो निधाय प्रतिज्ञादिकं पूर्ववत्कृ-

त्वा देशकालौ सङ्कीर्त्य मम (पित्रादेः) भगवत्प्रसादान्मोक्ष-प्राप्तये इमां मोक्षधेनुं रुद्रदैवताम् (तन्मूल्यद्रव्यममुकदैवतम्) अमुकगोत्राय ब्राह्मणाय०

मोक्षं देहि हृषीकेश मोक्षं देहि जनार्दन ।
मोक्षधेनुप्रदानेन मुकुन्दः प्रीयतां मम ॥ इति पठन्०

(मूल्यपक्षे "मोक्षधेनोर्मूल्यदानान्मुकुन्दः प्रीयतां मम" ।
इत्युत्तरार्धं परिकल्प्य पठन्) दद्यात् । ब्राह्मणः स्वस्तीति० ततो दानप्रतिष्ठां दद्यात् ।

अथ वैतरणीधेनुदानम् ।

कृष्णां गां तन्निष्क्रयद्रव्यं वा पुरतो निधाय प्रतिज्ञादि-पूजनान्तं पूर्ववत्कृत्वा गां प्रार्थयेत्—

धेनुके त्वं प्रतीक्षस्व यमद्वारे महाभये ।
उत्तितीर्षुरहं (रयं) देवि वैतरण्यै नमोऽस्तु ते ॥

ततो ब्राह्मणं प्रार्थयेत् ।

विष्णुरूप द्विजश्रेष्ठ भूदेव पङ्क्तिपावन ।
तर्तुं वैतरणीं कृष्णां गामेनां प्रददाम्यहम् ॥ (अस्येतिशेषः)

ततो गोपुच्छं गृहीत्वा देशकालौ सङ्कीर्त्य मम (पित्रादेः) वैतरणीनदीसन्तरणार्थम् इमां कृष्णां रक्तमाल्याद्यलङ्कृतां रुद्रदैवताम् (तन्निष्क्रयद्रव्यममुकदैवतम्) अमुकगोत्राय ब्राह्मणाय०

यमद्वारे महाघोरे कृष्णा वैतरणी नदी ।
(अस्य) तां तर्तुकामो यच्छामि कृष्णां वैतरणीं तु गाम् ॥
या सा वैतरणी प्रोक्ता पूयशोणितवाहिनी ।
(अस्य) हेलया तर्तुकामस्तां कृष्णां गां विधिवद्ददे ॥ इति पठन्०
(मूल्यपक्षे "यमद्वारे महाघोरे कृष्णा वैतरणी नदी ।
वैतरण्यास्तु गोर्मूल्यं (अस्य) तर्तुकामो ददामि ताम् ॥

भवसागरमग्नानां शोकतापोर्मिदुःखिनाम्।
त्राता त्वं हि जगन्नाथ शरणागतवत्सल" ॥ इति )
पठन् दद्यात्। ब्राह्मणः स्वस्तीति०। दानप्रतिष्ठां कुर्यात्।

अथ उत्क्रान्तिधेनुदानम्।

गां तन्निष्क्रयद्रव्यं वा पुरतः संस्थाप्य प्रतिज्ञादिपूजनान्तं पूर्ववत्कृत्वा कुशादिकमादाय देशकालौ सङ्कीर्त्य मम ( पित्रादेः ) सुखेन प्राणोत्क्रमणप्रतिबन्धकोक्तानिष्कृत्यनुक्तनिष्कृतिसकलपापक्षयद्वारा सुखेन प्राणोत्क्रमणसिद्ध्यये इमां गां रुद्रदैवताम् ( मूल्यद्रव्यममुकदैवतम् ) अमुकगोत्राय ब्राह्मणाय०

अप्युत्क्रान्तौ प्रवृत्तस्य सुखोत्क्रमणसिद्धये।
तुभ्यमेनां सम्प्रददे धेनुमुत्क्रान्तिसंज्ञिकाम् ॥ इति पठन्०
( मूल्यपक्षे पूर्वार्धं पूर्ववत् पठित्वा—
धेनोरुत्क्रान्तिसंज्ञाया मूल्यं तुभ्यं ददाम्यहम्।
इत्युत्तरार्धं योजयन् ) दद्यात्। ब्राह्मणः स्वस्तीति०। ततो दानप्रतिष्ठां दद्यात्।

अथ तिलपात्रदानम्।

षोडशपलताम्रनिर्मिते यथाशक्ति ताम्रनिर्मिते वा पात्रे तिलान् हिरण्यं च यथाशक्ति निधाय पूर्ववत् प्रतिज्ञापूजनादि कृत्वा कुशादिकं गृहीत्वा देशकालकीर्तनान्ते मम ( पित्रादेः ) जन्मप्रभृति अद्य यावत् कृतनानाविधपापशमनपूर्वकं श्रीपरमेश्वरप्रीतये इदं तिलपात्रं सहिरण्यं विष्णुदैवतम् अमुकगोत्राय ब्राह्मणाय०।

यानि कानि च पापानि ब्रह्महत्यासमानि च।
तिलपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥
इति पठन् दद्यात्। ब्राह्मणः स्वस्तीति०। दानप्रतिष्ठां दद्यात्।

इति ऋणधेन्वादिदानानि ।

ततः (१)शालग्रामादिकं पुरतः संस्थाप्य यथाशक्ति गन्धादिना ॐ नमो भगवते वासुदेवाय, ॐ नमः शिवाय इति वा सम्पूज्य यथारुचि शिवमन्त्रं विष्णुमन्त्रं वा जपेत् ।

जपेऽसमर्थश्चेत् हृदये चतुर्भुजं शङ्खचक्रगदापद्मधरं पीताम्बरकिरीटकेयूरकौस्तुभवनमालाधरं रमणीयरूपं विष्णुं, त्रिशूलडमरुधरं चन्द्रचूडं त्रिनेत्रं गङ्गाधरं शिवं वा भावयन् सहस्रनाम-गीता-भागवत-भारत-रामायणेशावास्याद्युपनिषदः पावमानादीनि सूक्तानि च यथासंभवं शृणुयात् ।

तत्र सङ्कल्पः अद्येह मम सकलैनसो निबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं यथासम्भवं चित्तैकाग्र्येण सहस्रनामादिश्रवणं करिष्ये इति सङ्कल्प्य ब्राह्मणं वृत्वा तीर्थे प्रसिद्धदेवायतने अग्निहोत्रागारे गोष्ठे अश्वत्थमूले (२)तुलसीवने शालग्रामशिलाग्रे वा गोमयोपालिप्तभूमौ दक्षिणाग्रदर्भास्तृते देशे गङ्गाजलैरभिषिक्तो गङ्गामृदा कृतोर्ध्वपुण्ड्रः भस्मना कृतत्रिपुण्ड्रो वा धृततुलसीरुद्राक्षान्यतरमालो मुखे धृतसुवर्णतुलसीपत्रो निकटस्थापितगङ्गाजलः प्राक्शिरा उदक्शिरा वा पुत्रोत्सङ्गे धारितशिरा ब्राह्मणमुखात्पूर्वसङ्कल्पितं सहस्रनामादि शृण्वन् स्वयमप्येकाग्रतया

---

(१) शुद्धितत्त्वे पूजारत्नाकरे

शालग्रामशिला यत्र तत्र संनिहितो हरिः ।
तत्संनिधौ त्यजेत्प्राणान् याति विष्णोः परं पदम् ॥

(२) शुद्धितत्त्वे व्यासः ।

तुलसीकानने जन्तोर्यदि मृत्युर्भवेत्क्वचित् ।
स निर्भर्त्स्य यमं पापी लीलयैव हरिं विशेत् ॥
प्रयाणकाले यस्यास्ये दीयते तुलसीदलम् ।
निर्वाणं याति पक्षीन्द्र पापकोटियुतोऽपि सः ॥ इति ।

हरिं ध्यायन् स्त्रीपुत्रधनशरीरादिषु ममतामुत्सृज्य रामनामादि गृणन् असून् जह्यात् ।

स्वयमेतावत्कर्तुमशक्तस्य पुत्रादिरपरो बान्धवो वा व्रताद्यापनाद्येतावत्पर्यन्तं कर्म तत्प्रातिनिधित्वेन कुर्यात् ।

अथ देहत्यागानन्तरकृत्यम् ।

मृतं (१)शिबिकादि आरोप्य पुत्रादयो बान्धवादयश्चानाच्छादितमुक्तकेशाः--

अहरहर्नयमानो गामश्वं पुरुषं पशुम्(२) ।
वैवस्वतो न तृप्यति सुराप इव दुर्मतिः ॥

इति यमगाथाम् "अपेतः" (य०सं०३५) इत्यध्यायात्मकं यमसूक्तं च जपन्तोऽन्तर्यामिणं रामं कीर्तयन्तो वा नूतनवस्त्राच्छादितमूर्ध्वमुखं शवं दाहदेशं नीत्वा जलसमीपे शुचिभूमौ स्थापयेयुः । अन्येऽपि वृद्धपुरस्सराः प्रेतमनुगच्छेयुः ।

ततः कर्ता पुत्रादिर्वपनार्थं(३)सङ्कल्पं कुर्यात । देशकालस्मरणान्ते अमुकोऽहममुकगोत्रस्यास्मत्पित्रादेरमुकप्रेतस्य दाहपिण्डोदकदानाधिकारसिद्ध्यर्थं कक्षोपस्थशिखावर्जं केशनखलोम्नां (४)वपनं कारिष्ये ।

---

(१) आश्वलायनगृह्यपरिशिष्टे३-१-शिबिकेन गोशकटेनवा तमन्वञ्चोऽमात्या मुक्तशिखा अधोनिवीति ज्येष्ठप्रथमाः कनिष्ठजघन्या नयेयुः ॥ इति । (का०श्रौ०२५।७।१४) "सशरीरा दक्षिणा गच्छन्ति । अनसा" इति ।

(२) पुरुषं ह्यजमिति पाठो गदाधरकृते नवकण्डिकासूत्रभाष्ये दृश्यते । पुरुषं जगत् इत्यपि क्वचित्।

(३) प्रथमेऽहनि कर्तव्यं वपनं चानुभाविनाम् ।

इति मदनरत्ने गालवोक्तेः वपनं कार्यम् । आशौचान्तेऽपि "अनुभाविनां च परिवपनम्" इति आपस्तम्बोक्तेः कार्यमेव ।

(४) वपनं कर्तव्यम् इति विधिबलात् वपनं करिष्ये इत्येव स-

यानिकानि च पापानि ब्रह्महत्यासमानिच ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान् वपाम्यहम् ॥
इतिमन्त्रमुक्त्वा वपनं कृत्वा (१)स्नायात् । ततो नूतनव-

---

क्लृप्तः। यद्यपि "वपनं नैव कारयेत्" "तस्मान्नान्यत्र वापयेत्" इत्य-
पि दर्शनात् कारयिष्ये इत्यपि सम्भवति तथाऽपि-

यानिकानिच पापानि ब्रह्महत्यासमानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान् वपाम्यहम् ॥

इति मन्त्रलिङ्गात् बहुषु विधिषु वपनस्यैव विधानाच्च वपनं करिष्ये इत्येव उल्लेख उचितः इति बोध्यम्। तच्च वपनं तीर्थादौ धर्मार्थे दक्षिणकर्णमारभ्य उदकसंस्थम्। प्रायश्चित्ते शिखामग्रे ततोऽधस्तात् सर्वं, चूडाकरणे दक्षिणकर्णाच्छिखान्तं शिखामारभ्य वामकर्णान्तम्।

दक्षिणं कर्णमारभ्य धर्मार्थे, पापसंक्षये ।
शिखाद्यं,नवसंस्कारे शिखाद्यन्तं शिरो वपेत्॥ इत्यपरार्कवचनात्।

(१) अथ पुत्रादिराप्लुत्य कुर्याद्दारुचयं महत्।
भूप्रदेशे शुचौ देशे पश्चाच्चित्यादिलक्षणे ॥
तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं, मुखे ।
आज्यपूर्णां स्रुचं दद्यात् दक्षिणाग्रां, नासि स्रुवम् ॥
इति छन्दोगपरिशिष्टे ।

तत्र मुखादौ स्रुगादिपात्रन्यास अग्निमद्विषयः ।

वराहपुराणे-दक्षिणाशिरसं कृत्वा सचैलं तु शवं तथा ।
तीर्थस्यावाहनं कृत्वा स्नपनं तत्र कारयेत् ॥

गयादीनिच तीर्थानि० इत्यादीनि अग्रे मूले द्रष्टव्यानि ।

प्रेतस्यास्य विशुद्ध्यर्थमस्मिंस्तोये विशन्तु वै ।
देवाश्चाग्निमुखाः सर्वे, गृहीत्वा तु हुताशनम् ॥
गृहीत्वा पाणिनाचैव मन्त्रमेतमुदीरयेत् ।
"कृत्वा तु दुष्कृतं कर्म जानता वाप्यजानता ॥
मृत्युकालवशं प्राप्तं नरं पञ्चत्वमागतम् ।
धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ॥
दहेयं सर्वगात्राणि दिव्यांल्लोकान् स गच्छतु" ।

स्त्रयुगलं धारयित्वा प्रायश्चित्तार्थं सङ्कल्पं कुर्यात्—अद्येह देशकालौ स्मृत्वा अमुकोऽहम् अमुकगोत्रस्य अस्मत्पित्रादेरमुकप्रेतस्य और्ध्वदेहिकाधिकारसिद्ध्ये कृच्छ्रत्रयप्रत्याम्नायभूतमिदं हिरण्यादि द्रव्यममुकदैवतं यथानामगोत्राय ब्राह्मणाय सद्यः सूतकान्ते वा दास्ये । अशुचिमरणादावपि तत्तत्पापक्षयार्थं प्रायश्चित्तमत्रैव कुर्यात् । ततः प्रेतं जलसमीपं नीत्वा संस्नाप्य संमार्ज्य वा वस्त्रमुत्सार्य घृतेन तिलतैलेन वाऽभ्यज्य तीर्थादन्यत्र स्नानोदके तीर्थान्यावाहयेत्—

गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः ।
कुरुक्षेत्रं च गङ्गा च यमुना च सरिद्वरा ॥
कौशिकी चन्द्रभागा च सर्वपापप्रणाशिनी ।
नन्दा भद्राऽवकाशा च गण्डकी सरयूस्तथा ।
भैरवं च वराहं च तीर्थं पिण्डारकं तथा ॥
पृथिव्यां यानि तीर्थानि चत्वारः सागरास्तथा ।
प्रेतस्यास्य विशुद्ध्यर्थमस्मिंस्तोये विशन्तु वै ॥

इति तीर्थान्यावाह्य धात्रीचूर्णलेपनपूर्वकं प्रेतं पुनः संस्नाप्य(१) वस्त्रखण्डेन प्रोञ्छ्य नूतनपट्टवस्त्रं परिधाप्य यज्ञोपवीतगोपीचन्द-

---

एवमुक्त्वा ततः शीघ्रं कृत्वाचैव प्रदक्षिणम् ॥
ज्वलमानं तथा वह्निं शिरस्थाने प्रदापयेत् ।
चतुर्वर्णेषु संस्थानमेवं भवति पुत्रिके ॥ इति ।

(१) छन्दोगपरिशिष्टे—दुर्बलं स्नापयित्वा तं शुद्धचैलाभिसंवृतम् ।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत् ॥
घृतेनाभ्यक्तमाप्लाव्य सुवस्त्रमुपवीतिनम् ।
चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विभूषयेत् ॥
हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु ।
मुख्येष्वथ पिधायैनं निर्हरेयुः सुतादयः ॥ इति ।
मुख्येषु मुखभवेषु सप्तसु छिद्रेषु चक्षुर्नासाकर्णमुखेषु ।

नतुलसीमालाभिश्चालङ्कृत्यागरुश्रीखण्डपद्मकोशीरकर्पूरमृगमद-कुङ्कुमादिसुगन्धिद्रव्यैर्यथालाभं सर्वाङ्गं विलिप्य मुखचक्षुर्नासा-कर्णरन्ध्रेषु सप्तसु हिरण्यशलाकां तदभावे आज्यबिन्दून्निक्षिप्य अहतनूतनपट्टादिवस्त्रस्य चतुर्थभागं छित्त्वा श्मशानवासिभ्यो दातुमवस्थाप्य त्रिभिर्भागैः पादतलवर्जं शिरःप्रभृत्यङ्गुलिपर्यन्तं प्रेतमाच्छादयेत् । एवं प्रेतं संस्कृत्य तस्य दक्षिणपार्श्वे दक्षि-णाभिमुख उपविश्य बद्धशिख आचम्य प्राणानायम्य कृताप-सव्यो यवपिष्टेन षट् पिण्डान् श्मशानवासिभूतेभ्यो देयं बलिं च पूर्वमेव सौकर्यार्थं संपाद्य मृतिस्थानपिण्डं(१)दद्यात् । सति-लकुशोदकमादाय कृतापसव्यो देशकालौ स्मृत्वा अमुकगोत्र-स्यामुकप्रेतस्य(२) मृतिस्थाननिमित्तकं पिण्डप्रदानं करिष्ये इति

---

(१) निर्णयसिन्धौ गारुडे षट्पिण्डदानमुक्तम्—

मृतस्योत्क्रान्तिसमये षट् पिण्डान् क्रमशो ददेत् ।
मृतिस्थाने तथा द्वारि चत्वरे तार्क्ष्यकारणात् ॥
विश्रामे काष्ठचयने तथा संचयने च षट् ।
तथा—आदौ देयास्तु षट् पिण्डा दशपिण्डा दशाहिकाः ।
स्थाने चार्द्धपथेऽतीते चितायां शवहस्तके ।
श्मशानवासिभूतेभ्यः षष्ठं सञ्चयनं तथा ॥
"स्थाने चार्धपथे द्वारि"इति क्वचित्पाठः । युक्तश्चायम् ।

(२) अन्त्येष्टिप्रदीपे गोभिलः—

विहाय गतवान् स्थूलं देहं देहानुबन्धिनम् ।
याम्यमार्गं समापन्नः प्रेत इत्यभिधीयते ॥

यद्यपि स्थूलदेहत्यागानन्तरं स्त्रीपुंसभेदाभावात् स्त्रियामपि पुं-लिङ्गनिर्देश एव प्राप्नोति तथापि—

प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः ।

इत्यमरव्याख्याधृतवचनेन प्रेतशब्दस्य मृतमात्रे वाच्यलिङ्गत्व-बोधनेन स्त्रीसंस्कारानुवृत्तिसम्भवेन च स्त्रियां प्रेताया इत्येव वाच्यम् । एवमुत्तरत्र सर्वत्र अमुकगोत्रे अमुकप्रेते इति सम्बुद्ध्यन्तमूह्यम् । स्पष्टं चेदं श्राद्धरत्नावल्याम् ।

प्रतिज्ञां कृत्वा—

शुद्धभूमौ कुशानास्तीर्य हस्ते कुशादिकं गृहीत्वा अद्येह अमुकगोत्रामुकप्रेत इदमवनेजनं तवोपतिष्ठताम्। यवपिण्डं गृहीत्वा अद्येह अमुकगोत्रामुकप्रेत मृतिस्थाननिमित्तक एष पिण्डो मद्दत्तस्तवोपतिष्ठताम्। ततः कुशादिकमादाय अद्येह अमुकगोत्रामुकप्रेत इदं प्रत्यवनेजनं तवोपतिष्ठताम्। इदं शीतलोदकं तवोपतिष्ठताम्। अयं गन्धस्तवोपतिष्ठताम्। एते अक्षतास्तवोपतिष्ठन्ताम्। इदं भृङ्गराजपत्रं तवोपतिष्ठताम्।

अनादिनिधनो देवः शङ्खचक्रगदाधरः।
अव्ययः पुण्डरीकाक्षः प्रेतमोक्षप्रदो भव॥ इति—

प्रार्थयेत्। इति मृतिस्थानपिण्डं दत्त्वा एवमेव निर्गमद्वारनिमित्तकपिण्डदानं करिष्ये इति सङ्कल्प्य द्वारपिण्डं दत्त्वा विश्रामनिमित्तकपिण्डदानं करिष्ये इति सङ्कल्प्य पूर्वोक्तप्रकारेण विश्रामपिण्डं दद्यात्।

ततः कृमिकेशादिनिचयरहितायां भूमौ—
"अपसर्पन्तु ते प्रेता ये केचिदिह पूर्वजाः"

इति भूमिं सम्प्रार्थ्य भूमौ दक्षिणाग्रान् कुशानास्तीर्यागरुचन्दनदेवदारुबिल्वादियज्ञियकाष्ठैर्दक्षिणोत्तरायतं दारुचयं कृत्वा चितानिमित्तकपिण्डप्रदानं करिष्ये इति सङ्कल्प्य पूर्ववत् चितापिण्डं दत्त्वा तत्रोत्तानं दक्षिणाशिरसं(१) प्रेतं निधाय शवहस्तनि-

---

(१) यद्यपि "अधोमुखो दक्षिणादिक्चरणस्तु पुमानिति।
सगोत्रजैर्गृहीत्वा तु चितामारोप्यते शवः॥
उत्तानदेहा नारी तु सपिण्डैरपि बन्धुभिः"।

इत्यादिपुराणात् पुंसः अधोमुखत्वम् उत्तरशिरस्त्वं च दाहे शुद्धितत्त्वादावुक्तम्, तथाऽपि—

तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे।

मित्तकपिण्डप्रदानं करिष्ये इति प्रतिज्ञाय पूर्वोक्तरीत्या शव-हस्ते पिण्डं दद्यात् । एकं पिण्डं बालिं च सुरक्षितं स्थापयेत् । ततः क्रव्यादमग्निं संस्कृत्य सव्येन क्रव्यादपूजां कुर्यात् ।

त्वं भूतकृज् जगद्योने त्वं लोकपरिपालकः ।
उक्तः संहारकस्तस्मादेतं स्वर्गं मृतं नय ॥

एष गन्धः क्रव्यादाग्नये नमः । एते अक्षताः क्रव्यादाग्नये नमः । इमानि पुष्पाणि० । एष धूपः० । एष दीपः० । इत्थमग्निं सम्पूज्यापसव्यं कृत्वा हुताशनमादाय तिष्ठन् मन्त्रमुदीरयेत्—

कृत्वा तु दुष्कृतं कर्म जानता वाऽप्यजानता ।
मृत्युकालवशं प्राप्तं नरं (१)पञ्चत्वमागतम् ॥

---

इति पूर्वोक्तछन्दोगपरिशिष्टवचनेन कात्यायनानुयायिनाम् उत्तानत्वं दक्षिणाशिरस्त्वमेवच स्वीकर्तुमुचिम् ।

एवमेवागृहीताग्नेः प्रेतस्य विधिरिष्यते ।

इत्युरत्र छन्दोगपरिशिष्टे कात्यायनेन अनग्निमतोऽपि पात्रन्यासादिभिन्नकर्मणः अतिदेशात् । एतेन छन्दोगपरिशिष्टं पात्रन्यासाद्युक्तेः अग्निमत्परमेव इति केशाञ्चिदुक्तिः परास्ता । पूर्वोक्तादिपुराणं तु कातीयाद्यतिरिक्तपरमेव ।

सर्वं च प्रेतकर्म अपसव्यादिपित्र्यधर्मकमेव ।
अपसव्येन कृत्वैतद् वाग्यतः पित्र्यदिङ्मुखः ।
अथाग्निं सव्यजान्वक्तो दद्याद्दक्षिणतः शनैः ॥
अस्मात्त्वमधिजातोऽसि० स्वाहेति यजुरीरयन् ।

इति छन्दोगपरिशिष्टे सर्वेषां पित्र्यधर्माणां विधानात् ।

( १ ) "नरं पञ्चत्वमागतम्" इत्यत्र न लिङ्गोहः । स्त्रीपुंसदाहस्य समविधाने प्रकृतिविकृतिभावाभावात् । नच विभक्त्यर्थपुंस्त्वविशिष्टबोधात् स्त्रियां बाध इति वाच्यम् । प्राथमिकत्वाद् बलीयसः प्रातिपदिकार्थस्य समवेतत्वेन स्त्रीपक्षेऽपि विनियोगात् । स्पष्टंचेदं पूर्वमीमांसायां न० ९। अतएव "एतद्वः पितरो वास इति जल्पन् पृथक् पृथक्" इति ब्रह्मपुराणे पित्रादिषु प्रत्येकं बहुवचनान्तप्रयोगात्

धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ।
दहेयं सर्वगात्राणि दिव्यान् लोकान्स गच्छतु ॥

इति मन्त्रमुच्चार्य चितां त्रिः सकृद्वा प्रदक्षिणीकृत्य (१)शिरःप्रदेशे वक्ष्यमाणमन्त्रं पठन् वह्निं दद्यात्—(य.सं.३५।२२) ।

"अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ।
(असौ) स्वर्गाय लोकाय स्वाहा" इति(२) ।

'असौ'इत्यस्य स्थाने प्रथमान्तं प्रेतनाम प्रयोज्यम् ।

---

तत्रानर्थक्यात् एकोद्दिष्टेऽपि बहुवचनान्त एव प्रयोज्यो नत्वेकवचनान्त ऊह्यः । प्रातिपदिकार्थस्य समवेतत्वात् । एवमेव "अनादिनिधनो देव" इतिमन्त्रान्ते "प्रेतमोक्षप्रदो भव" इति पुंल्लिङ्गपाठो न तु 'प्रेतामोक्ष' इति । एवं "गतोऽसि दिव्यलोकं त्वम्" इत्यत्रापि इत्यलं भूयसा ।

(१) "शिरस्थाने प्रदापयेत्" इतिपूर्वोक्तवाराहवचनात् । शिष्टसमाचाराच्च । प्राचीनपर्वतीयपद्धतौ तु स्त्रियाः पादप्रदेशे अग्निदानं दृश्यते, तत्र मूलं मृग्यम् । निबन्धेष्वनुपलम्भात् ।

(२) स्त्रियां तु अस्मात्त्वमितिमन्त्रो न प्रयोक्तव्यः ।

अनयैवावृता नारी दग्धव्या या व्यवस्थिता ।
अग्निप्रदानमन्त्रोऽस्यां न प्रयोज्य इति स्थितिः ॥

इति छन्दोगपरिशिष्टवचनात् । किन्तु—

"कृत्वातु दुष्कृतं कर्म" इति पूर्वं वराहपुराणोक्तो मन्त्र एव प्रयोज्यः । तस्य सर्वसाधारणत्वात ।

केचित्तु—स्त्रीणामिवाग्निदानं स्यादथातो ऽनुक्तमुच्यते ।

इति छन्दोगपरिशिष्टवचनेन अनग्नेः पुंसोऽपि अमन्त्रकमेव अग्निदानं कार्यम । अत एव तृतीयकाण्डे पारस्करगृह्ये "तूष्णीं ग्रामाग्निं नेतरम्" इति तूष्णीमेव अग्निदानं विहितम् इत्याहुः । वाराहमन्त्रस्तु सर्वत्र प्रयोज्य एव । तस्य सर्वसाधारणत्वादिति सर्वसम्मतम् ।

कातयिश्रौतसूत्रेतु (अ०२५।७।३८) "अग्निभिरादीपयन्ति" इत्यग्निदानानन्तरम् "आहुतिं जुहोति पुत्रोभ्रातावाऽन्यो ब्राह्मणः(अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहेति)" घृताहुतिः अस्मात्त्वमित्यनेन विहिता । सकलपाठः पत्न्यामप्यनूह-

प्राद्यर्थ इति च तत्र भाष्यकारेणोक्तम्। तेनच स्त्रियामपि एतन्मन्त्रपाठो लभ्यते। परं तु घृताहुतावेव पत्नीविषये एतन्मन्त्रपाठो नतु अग्निदाने।

अग्निप्रदानमन्त्रोऽस्यां न प्रयोज्य इति स्थितिः।

इति छन्दोगपरिशिष्टे निषेधात्।

अत्रेदं बोध्यम्। पारस्करगृह्ये (कां३।१०) "यद्युपेतो भूमिजोषणादि समानमाहिताग्नेरोदकान्तस्य गमनात्" १०। इतिसूत्रेण उपनीतस्य भूसंस्काराद्युदकदानान्तक्रियाया आहिताग्निसमानत्वविधानात् आहिताग्निशब्देन च आवसथ्याग्निमत एवात्र भाष्ये व्याख्यातत्वात् आवसथ्याग्निमतश्च श्मशानक्रियायाश्छन्दोगपरिशिष्ट एव कात्यायनेनाभिधानात् आवसथ्याग्निमतः कातीयस्य अग्निदाने एव श्रौताग्निरहितस्य एतन्मन्त्रविनियोग उचितो न तु घृताहुतौ। यद्यप्येवम् आवसथ्याग्निरहितस्याग्निदाने नैतस्य विनियोगः प्राप्नोति तथापि (पा०सू०कां०३।१२) "तूर्ष्णीं ग्रामाग्निनेतरम्" इति सूत्रे इतरशब्देन छन्दोगपरिशिष्टे "एवमेवागृहीताग्नेः प्रेतस्य विधिरिष्यते। स्त्रीणामिवाग्निदानं स्यादथातोऽनुक्तमुच्यते" इत्यत्र अगृहीताग्निशब्देन च आधानाधिकाररहितस्य ग्रहणात् अकृतविवाहस्यैवाग्निदाने नायं प्रयोज्यः, कृतविवाहस्य तु तदधिकारित्वात्प्रयोज्य एव। शिष्टाचारात्। केचित् दाक्षिणात्यास्तु घृताहुतिमेव गारुडे विहितामनेन कुर्वन्ति समाचारात्। तेषामग्निदानस्य सवैदिकमन्त्रत्वं गृह्यसिद्धं परिशिष्टसिद्धं च न सिध्यतीत्यलम्।

(१)पञ्चकमृतस्य तु दर्भमयीः पञ्च प्रतिमाः कृत्वोर्णासूत्रेण

---

(१) ब्राह्मे—कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते।
न तस्योर्ध्वगतिर्दृष्टा सन्ततौ न शुभं व्रजेत्॥
न तस्य दाहः कर्तव्यो विनाशात्स्वेषु जन्तुषु।
अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकः॥
धनिष्ठापञ्चके जीवो मृतो यदि कथञ्चन।
त्रिपुष्करे याम्यभे वा कुलजान् मारयेद्ध्रुवम्॥
तत्रानिष्टविनाशार्थं विधानं समुदीर्यते।
दर्भाणां प्रतिमाः कार्याः पञ्चोर्णासूत्रवेष्टिताः॥

वेष्टयित्वा जलयुतयवपिष्टेनानुलिप्य देशकालौ स्मृत्वा अमुकगोत्र-स्यामुकस्य पञ्चकमरणजनितवंशानिष्टपरिहारार्थं पञ्चकविधिं करिष्ये इति सङ्कल्प्य ॐ प्रेतवाहाय नमः १, प्रेतसखाय नमः २, प्रेतपाय नमः ३, प्रेतभूमिपाय नमः४, प्रेतहर्त्रे नमः ५ इति नामभिर्गन्धाद्यैस्ताः प्र-तिमाः प्रेतवाहाद्यावाहनपूर्वकं सम्पूज्य दाहसमये प्रेतस्योपरि प्रथमां शिरसि, द्वितीयां नेत्रयोः, तृतीयां वामकुक्षौ, चतुर्थीं नाभौ, पञ्चमीं पादयोर्निधाय पूर्वोक्तैरेव स्वाहान्तैर्नाममन्त्रैः क्रमेण पञ्च घृताहुती-र्हुत्वोदकधारां दत्त्वा पूर्वोक्तविधिना वह्निप्रदानं कुर्यात् ।

रविभौममन्दवाराणां, कृत्तिकापुनर्वसूत्तराफल्गुन्युत्तराषाढावि-शाखापूर्वाभाद्रपदाख्यत्रिपादृनक्षत्राणां,द्वितीयासप्तमीद्वादशीनांच यो गस्त्रिपुष्करः । तत्र मृतस्य मुखे हिरण्यशकलं घृतं वा प्रक्षिप्य पूर्ववत् तिस्रः पिष्टमयीः प्रतिमाः कृत्वा मृतितिथ्यधिष्ठातृदेवतायै नमः १ मृतिवाराधीशाय नमः२ मृतित्रिपान्नक्षत्राधिपतये नमः३ इति गन्धा-दिना तत्तदावाहनपूर्वकं सम्पूज्य प्रथमां शिरसि, द्वितीयां नेत्रयो-स्तृतीयां वामकुक्षौ निधाय पूर्ववत्—

"वह वपां जातवेदः पितृभ्यो यत्रैनान् वेत्थ निहितान् पराके ।
मेदसः कुल्या उप तान् स्रवन्तु सत्या एषामाशिषः संनमन्ताᳪं स्वाहा॥

इति मन्त्रेण (य०सं०३५।२०) स्वाहान्तैर्नाममन्त्रैर्वा तिस्रो घृता-हुतीर्हुत्वोदकधारां दत्त्वा पूर्वोक्तप्रकारेणाग्निदानं कार्यम् ।

---

यवपिष्टेनाऽनुलिप्तास्ताभिः सह शवं दहेत् ।
प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः ॥
प्रेतहर्ता पञ्चमस्तु नामान्येतानि च क्रमात् ।
सुतकान्ते ततः पुत्रः कुर्याच्छान्तिकपौष्टिकम् ॥ इति ।

अत्र प्रतिमा गन्धपुष्पैः पूजयित्वा प्रथमां शिरसि, द्वितीयां नेत्रयोः, तृतीयां वामकुक्षौ, चतुर्थीं नाभौ, पञ्चमीं पादयोर्न्यस्य तदुपरि नामभिर्घृतं हुवेत् इति भट्टाः ।

अपरार्के—त्रिपादृक्षमृते तद्वद्धिरण्यशकलं मुखे ।
न्यस्य पिष्टमयं कुर्यात् पुरुषत्रितयं ततः ॥
होमं प्रतिमुखं कुर्यात् तथा "वहवपामिति ।
सुवर्णस्याप्यभावे तु आज्यं ज्ञेयं विचक्षणैः ॥ इति ।

विशेषशान्तिं सूतकान्ते द्वादशदिने त्रयोदशदिने वा कुर्यात् । तत्प्रकारश्चाग्रे वक्ष्यते ।

रजस्वलामरणे तु उद्‌धृतेन तोयेन तां पूर्वं संस्नाप्यानन्तरमेकं घटं जलेन पूरयित्वा तत्र पञ्चगव्यं क्षिप्त्वा "आपोहिष्ठेति तिसृभिः "पुनन्तुमेति नवभिः (य०सं०१९।३७-४४) " आपो अस्मान्' (य० सं०४।२) इत्यनेन च, आपोहिष्ठातित्रयसहितेनानेनैव वा जलमभिमन्त्र्य तेन जलेन, शूर्पोदकेन च शतकृत्वस्तां स्नापयित्वा नववस्त्रेण वेष्टयित्वा दहेत् । चान्द्रायणत्रयं च प्रत्याम्नायद्वारा कुर्यात् । पञ्चदश नव वा धेनवः प्रत्याम्नायः ।

सूतिकामरणेऽप्येवमेव । प्रायश्चित्ते तु विशेषः प्रथमत्र्यहान्तरमरणे त्र्यब्दव्रतम् ( ९० नवतिर्धेनवः ) । द्वितीयत्र्यहान्तरमरणे द्व्यब्दव्रतम् ( ६० षष्टिर्धेनवः ) । तृतीयत्र्यहान्तरमरणे एकाब्दव्रतम् ( ३० त्रिंशद्धेनवः ) । अशक्तस्यतु सर्वत्र ३०त्रिंशद्धेनव एव ।

नवाहानन्तरं तु मासपर्यन्तं धेनुत्रयम् ।

एवम् ऊर्ध्वोच्छिष्टाधरोच्छिष्टमरणे खट्वादिमरणे शवस्य अस्पृश्यश्वानादिस्पर्शेच धेनुत्रयम् ।

गर्भिणीमरणे तु कुक्षिं भित्त्वा ततः शल्यं निर्हृत्य दहेत् यदि जीवति । प्रमीतश्चेत्तं निखनेत् । ३३त्रयस्त्रिंशद्धेनवो गर्भिण्याः पापनिवृत्तये देयाः । पञ्चमादारभ्य षण्मासाभ्यन्तरे गर्भसहितां दग्ध्वा ९० नवतिर्धेनवः । तदूर्ध्वं तत्तद्वर्णवधनिमित्तकं प्रायश्चित्तम् ।

कुष्ठिमरणे तु शवं दिनत्रयं गोष्ठादिभूमिषु निखाय पश्चात्तत उद्धृत्य सति सम्भवेऽशीत्युत्तरशतधेनूः १८०, तदसम्भवे नवतिधेनूः ९० दत्त्वा यथाविधि दहेत् । ततोऽस्थिसञ्चयं गङ्गायां प्रक्षिपेत् । अनन्तरं सर्वमेव कृत्यमाचरेत् इति निर्णयसिन्धौ ।

श्राद्धरत्नावल्यां तु—

"मृतस्य कुष्ठिनो देहं निखनेद् गोष्ठभूमिषु" ।
इति यमवचनस्य देशाचारतो विरुद्धत्वमुक्त्वा—
शृणु कुष्ठगणं विप्र उत्तरोत्तरतो गुरुम् ।
विचर्चिका तु दुश्चर्मा चर्म्मरीयस्तृतीयकः ॥
विकर्चुर्व्रणताम्रौ च कृष्णश्श्वेतस्तथाष्टकम् ।

इति कुष्ठगणं प्रदर्श्य,

मृते च प्रापयेत्तीर्थमथवा तरुमूलकम्।
न पिण्डं नोदकं कुर्यात् न च दाहक्रियां चरेत्॥

इति भविष्योक्तप्रकारेण शवं तीर्थे किञ्चित्कालं संस्थाप्य ततो जले प्रक्षिप्य पुत्तलविधिं कृत्वा कर्म कुर्यात्" इत्युक्तम्। शुद्धितत्त्वे तु (२८६ पृ०) "भविष्यपुराणीयमध्यतन्त्रषष्ठाध्याये।

'शृणु कुष्ठगणं विप्र' इत्यादि 'न च दाहक्रियां चरेत्' इत्यन्तं श्राद्धरत्नावल्युक्तं निर्दिश्य-

षण्मासीयास्त्रिमासीयो मृतः कुष्ठी कदाचन।
यदि स्नेहाच्चरेद्दाहं यतिचान्द्रायणं चरेत्॥

यतिचान्द्रायणाशक्तौ धेनुचतुष्टयं देयम्। अतिपातकशेषफलत्वादेवमुक्तम्। यथाऽऽह विष्णुः "अथ नरकानुभूतदुःखानां मानुष्ये लक्षणानि भवन्ति कुष्ठ्यतिपातकी, ब्रह्महा यक्ष्मी, सुरापः श्यावदन्तकः, सुवर्णहारी कुनखी, गुरुतल्पगो दुश्चर्मा" इत्यादि। कुष्ठिनो दाहे इदं भविष्योक्तं यतिचान्द्रायणम् अकृतप्रायश्चित्तानां कुष्ठ्यादीनां दाहे बोध्यम्। अन्यथा "कुनखी श्यावदन्तश्च द्वादशरात्रं कृच्छ्रं चरित्वोद्धरेयातां तद्दन्तनखौ" इति विष्णूक्तं द्वादशरात्रं पराकरूपं व्रतं विफलं स्यात्। तत्र बहूनामेकधर्माणामिति वचनात् आकाङ्क्षितत्वाच्च कुनखिश्यावदन्तोक्तं पराकव्रतं कुष्ठ्यादीनामपि बोध्यम्। महापातकादतिपातकस्य गुरुत्वात्तच्छेदेऽपि प्रायश्चित्तं द्विगुणम् (पराकद्वयात्मकम्)। (पराकश्च प्राजापत्यकृच्छ्रपञ्चकतुल्य इति पञ्च धेनवः प्रत्याम्नायः। तस्य तत्तुल्यत्वं च "षड्भिर्वर्षैः कृच्छ्रचारी ब्रह्महत्यां व्यपोहति। मासिमासि पराकेण त्रिभिर्वर्षैर्व्यपोहति"॥ इत्यङ्गिरोवचनेन (प्रा० तत्त्वे ५४६) सिध्यति। वर्षत्रयसाध्य३६पराकाणां वर्षषट्कसाध्य१८०प्राजापत्यतुल्यफलकत्वात् तेषां च तत्पञ्चमांशत्वात्।) एवं च—

ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च।
चरेद् गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये॥

इत्यङ्गिरोवचनेन—

रोगी वृद्धस्तु पौगण्डः कुर्वन्त्यन्यैर्व्रतं सदा।

इति ब्रह्मपुराणीयवचनेन च अन्यपापक्षयार्थमन्यकर्तृकप्रायश्चित्तदर्शनात् अत्राऽपि तुल्यन्यायतया स्वयमकृतप्रायश्चित्तस्य मृतस्य

कुष्ठ्यादेः पुत्रादिना प्रायश्चित्तं कृत्वा दाहादिकं कार्यम्" इत्युक्तम्।

अद्यत्वे प्रायः कुष्ठिनो देहं जले प्रक्षिप्य यथासम्भवं प्रायश्चित्तं कृत्वा पर्णनरं दग्ध्वा उदकदानाद्याचरणमिति संप्रदायो बहुत्र दृश्यते।

पर्णनरदाहविधिश्च—

"कुर्याद्दर्भमयं प्रेतं दर्भैस्त्रिशतषष्ठिभिः।
पालाशीभिः समिद्भिर्वा सङ्ख्यावैवं प्रकीर्तिता॥

इति हेमाद्रौ षट्त्रिंशन्मते उक्तः। तत्प्रकारश्च भविष्योक्तः—तत्र भूमौ कृष्णाजिनमास्तीर्य तत्र शरं दक्षिणायतं निवेश्य तत्र पलाश-वृन्तानि इत्थं न्यसनीयानि। शिरस्थाने४०, ग्रीवायां१०, बाह्वोः प्रत्ये-कं पञ्चाशदित्येवं १००, कराङ्गुलीषु१०, उरसि२०, जठरे२०, शिश्ने४, अण्डयोः प्रत्येकं त्रीणीति६, ऊर्वोः प्रत्येकं पञ्चाशदित्येवं १००, जङ्घातः पादतलान्तं प्रत्येकं पञ्चदशेति एवं३०, पादाङ्गुलीषु१०, एवं षष्ट्यधिकशतत्रयमिताभिः पालाशसमिद्भिः तावद्भिर्दर्भैर्वा शरीरं कृत्वा ऊर्णावस्त्रेण बद्ध्वा जलमिश्रयवपिष्टेन लिम्पेत्।

शक्तौ सत्यां शिरसि नालिकेरफलं वर्तुलालाबूं वा, ललाटे क-दलीपत्रं, दन्ते दाडिमबीजानि, कर्णयोः ब्रह्मपत्रम्, चक्षुषोः कपर्दौ, नासिकायां तिलपुष्पं, नाभावब्जं, स्तनयोर्जम्बीरफलद्वयं, वाते मनः-शिलां, पित्ते हरितालं, कफे समुद्रफेनं, रुधिरे मधु, पुरीषे गोमयं, मूत्रे गोमूत्रं, शुक्रे पारदं, वृषणयोर्वृन्ताकद्वयं, शिश्ने गृञ्जनं, केशेषु वटप्ररोहान्, लोमसु ऊर्णाः, मांसे माषपिष्टलेपं दद्यात्।

ततः पञ्चगव्यैः पञ्चामृतैश्च सर्वतः सेचनम्।

ततः "पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आ-गन् पुनश्चक्षुः पुनः श्रोत्रं म आगन्" इति मन्त्रेण (य० सं० ४।१५) प्राणप्रवेशं भावयेत्। "शिरोमे" इत्यनुवाकेन (य० सं० २०।५-९) सर्वाङ्गेषु नियोजयेत्। ततः शरीरं स्नापयित्वा चन्दनमनुलिप्य वस्त्रो-पवीते परिधाप्य 'अयं स देवदत्त' इत्यभिमृश्य 'इदं चास्यौपासनम्' इति ध्यात्वा विधिवद्दाहादि कार्यम्।

अयं च पर्णश(न)रदाहविधिः—

यस्य न श्रूयते वार्ता यावद् द्वादश वत्सरान्।
कुशपुत्तलदाहेन तस्य स्यादवधारणा॥

इति बृहस्पतिना,

पितरि प्रोषिते यस्य न वार्ता नैव चागमः ।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥
कुर्यात्तस्य तु संस्कारं यथोक्तविधिना ततः ।
तदादीन्येव सर्वाणि प्रेतकर्माणि कारयेत् ॥

इति भविष्ये चोक्तः ।

शास्त्रानुज्ञां विना शस्त्राग्निविषजलप्रवेशादिभिः स्वेच्छयाऽऽत्मघातकानां, विद्युदादिहतानां, महापातकिनां, तत्संसर्गिणां तत्तुल्यानां पतितानां च, स्त्रीणां च पत्यादिहन्त्रीणां, हीनजातिगामिनीनां, गर्भघ्नीनां, पूर्वोक्तात्मघातादिपापयुक्तानां च मृतौ नाशौचम् । एषां शवानां स्पर्शाश्रुपातदहनवहनान्त्यकर्माणि न कुर्यात् । स्पर्शादिकरणे कृच्छ्रादिप्रायश्चित्तभाग्भवेत् । तेषां मृतदेहस्य जले प्रक्षेपः । ततः संवत्सरोत्तरं पुत्रादिस्तदीयात्मघातादिपापानुसारेण प्रायश्चित्तं तस्य कृत्वा नारायणबलिं च कृत्वा पर्णशरदाहादिपूर्वकमाशौचमौर्ध्वदेहिकं च कुर्यात् ।

केचित्तु प्रेतशरीरं दग्ध्वा तदीयदेहदाहे पतितदाहे विहितं चान्द्रायणत्रयं कृत्वा अस्थीनि संस्थाप्याब्दान्ते पूर्वोक्तरीत्यौर्ध्वदेहिकमित्याहुः ।

अथवा लौकिकाग्निना तूष्णीं दग्ध्वा पुत्रादयः संवत्सरादर्वागपि आत्मघातादिपापोक्तप्रायश्चित्तद्विगुणप्रायश्चित्तपूर्वकं नारायणबलिं कृत्वा पर्णशरदाहमस्थिदाहं वा कृत्वा ऽऽशौचमौर्ध्वदेहिकं च कुर्युः ।

यद्वात्मघातिनां पुत्रादिः स्नानेन सद्यःशुद्धिं सम्पाद्य पूर्वोक्तं द्विगुणप्रायश्चित्तं कृत्वा नारायणबलिं कृत्वाऽकृत्वा वा दाहाशौचादिकं कुर्यात् ।

एवं चात्मघातिनां पतितादीनां च पूर्वोक्तानां सर्वेषां न मरणदिनमारभ्याशौचं, किन्तु प्रायश्चित्तपूर्वकसमन्त्रकदाहदिनमारभ्यैव । जलाग्न्यादिभिः प्रमादमृतानां तु मरणदिनमारभ्याशौचादिकमस्त्येव । किन्तु प्रमादमरणस्यापि दुर्मरणत्वात्तन्निमित्तप्रायश्चित्तपूर्वकमेव दाहादि कार्यम् ।

आत्मघातादिदुर्मरणे—शुक्लैकादश्यां नदीतीरादौ—

अमुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमित्तकप्रत्यवापपरिहारद्वारा और्ध्वदेहिकसम्प्रदानत्वयोग्यतासिद्ध्यर्थममुकप्रायश्चित्तं ना-

रायणबलिं च करिष्ये इति सङ्कल्प्य प्रायश्चित्तं कृत्वा यथाविधि स्थापिते कलशद्वये हेमप्रतिमयोर्विष्णुं यमं चावाह्य पुरुषसूक्तेन यमायत्वेति यमदैवतमन्त्रेण च (य०सं०३७।११) क्रमेण विष्णुं यमं च षोडशोपचारैः सम्पूज्य तत्पूर्वभागे रेखायां दक्षिणाग्रान् कुशाना-स्तीर्य 'शुन्धन्तां विष्णुरूपामुकप्रेत' इति दशस्थानेषु अवनिज्य मधुघृततिलमिश्रानोदनपिण्डान् दश 'अमुकगोत्रामुकप्रेत विष्णुरूप अयं ते पिण्ड' इति दक्षिणसंस्थान् पित्र्यधर्मेण दद्यात् । पिण्डान् गन्धादिभिरभ्यर्च्य प्रवाहणान्तं कृत्वा नद्यां क्षिपेत् ।

ततः रात्रौ नव सप्त पञ्च वा विप्रान्निमन्त्र्य जागरं कृत्वा श्वोभूते पुनर्विष्णुं सम्पूज्य, सद्य एव वा विप्रान् तदभावे कुशबटून् निमन्त्र्य विष्णुं संपूज्य एकोद्दिष्टविधिना श्राद्धपञ्चकं करिष्ये इति संकल्प्य ब्रह्मविष्णुशिवयमप्रेतान् स्मरन् विप्रानुपवेश्य प्रेतस्थानेचैकं विष्णुं सम-रन्नुपवेश्य एकस्मिन् विप्रे विप्रालाभे दर्भबटौ वा एकोद्दिष्टविधिना पादक्षालनादितृप्तिप्रश्नान्तं विष्णुरूपप्रेतावाहनपूर्वकं कृत्वा विप्रसमी-पे तूष्णीं रेखाः कृत्वा दर्भास्तरणेऽपोनिनयं च कृत्वा दर्भेषु सव्येन वि-ष्णवे, ब्रह्मणे, शिवाय, सपरिवाराय यमायचेति चतुर्भ्यः पिण्डचतु-ष्टयं दत्वा ऽपसव्येन 'विष्णुरूप प्रेतामुकगोत्रामुकप्रेतायं ते पिण्ड' इत्येवं पञ्चमं पिण्डं दत्वा गन्धादिभिरभ्यर्च्य प्रवाहणान्ते विप्राचा-मनादिश्राद्धशेषसमापनान्ते प्रेतबुद्ध्या तेषु एकस्मै विप्राय वस्त्राभर-णादि विशेषतो दत्वा दर्भबटौ वा वस्त्रादि समर्प्य विप्रसर्वे विप्रेण प्रेताय तिलाञ्जलिं दापयेत्—'अमुकगोत्रायामुकशर्मणे विष्णुरूपिणे प्रेतायायं तिलतोयाञ्जलिः' इति मन्त्रेण । विप्राभावे स्वयं दद्यात् । ततः 'अनेन नारायणबलिकर्मणा भगवान् विष्णुरिममुकप्रेतं शुद्ध-मपापमर्हं करोतु' इति विप्रान् वाचयेत् । ततः स्नात्वा भुञ्जीतेति ।

अत्र मिताक्षरायां मूलवचनानि ।

नारायणबलिस्वरूपं वैष्णवेऽभिहितं यथा—

एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ।
विष्णुं समर्चयेद्देवं यमं वैवस्वतं तथा ॥
दशपिण्डान् घृताभ्यक्तान्दर्भेषु मधुसंयुतान् ।
तिलमिश्रान्प्रदद्याद्वै संयतो दक्षिणामुखः ॥
विष्णुं बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् ।

नामगोत्रग्रहं तत्र पुष्पैरभ्यर्चनं तथा ॥
धूपदीपप्रदानञ्च भक्ष्यं भोज्यं तथाऽपरम् ।
निमन्त्रयेत विप्रान्वै पञ्च सप्त नवाऽपि वा ॥
विद्यातपःसमृद्धान्वै कुलोत्पन्नान् समाहितान् ।
अपरेऽहनि सम्प्राप्ते मध्याह्ने समुपोषितः ॥
विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत् ।
उदङ्मुखान्यथाज्येष्ठं पितृरूपमनुस्मरन् ॥
मनो निवेश्य विष्णौ वै सर्वं कुर्यादतन्द्रितः ।
आवाहनादि यत्प्रोक्तं देवपूर्वं तदाचरेत् ॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिं पृष्ट्वा यथाविधि ।
हविष्यव्यञ्जनेनैव तिलादिसहितेन च ॥
पञ्च पिण्डान् प्रदद्याच्च देवं रूपमनुस्मरन् ।
प्रथमं विष्णवे दद्याद् ब्रह्मणे च शिवाय च ॥
यमाय सानुचराय चतुर्थं पिण्डमुत्सृजेत् ।
मृतं सङ्कीर्त्य मनसा गोत्रपूर्वमतः परम् ॥
विष्णोर्नाम गृहीत्वैव पञ्चमं पूर्ववत् क्षिपेत् ।
विप्रानाचाम्य विधिवद्दक्षिणाभिः समर्चयेत् ॥
एकं वृद्धतमं विप्रं हिरण्येन समर्चयेत् ।
गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् ॥
ततस्तिलाम्भो विप्रास्तु हस्तैर्दर्भसमन्वितैः ।
क्षिपेयुर्गोत्रपूर्वं तु नाम बुद्धौ निवेश्य च ॥
हविर्गन्धतिलाम्भस्तु तस्मै दद्युः समाहिताः ।
मित्रभृत्यजनैस्सार्धं पश्चाद् भुञ्जीत वाग्यतः ॥ इति ।

इति नारायणबलिविधिः ।

---

सर्पदंशेन मृते विधानमुक्तं गारुडे—
प्रमादादिच्छया वापि नागाद्वै म्रियते यदि ।
पक्षयोरुभयोर्नागं पञ्चमीषु प्रपूजयेत् ॥
कुर्यात् पिष्टमयीं लेख्यां नागभोगाकृतिं भुवि ।
अर्चयेत् तां सितैः पुष्पैः सुगन्धैश्चन्दनेन च ॥
प्रदद्याद् धूपदीपौ च तण्डुलांश्च तिलान् क्षिपेत् ।

दह्यमाने प्रेते तदुपरि तिलान् विकिरेत् । ततः (१)सप्त समिधोऽभ्यादाय एकैकां प्रदक्षिणां कुर्वन् "क्रव्यादाय नम" इति पठन् एकैकां प्रक्षिपन् चितोपरि सप्त समिधः प्रक्षिपेत्। उल्मुकोपरि कुठारेण सप्त प्रहारांश्च दद्यात् । अत्रावसरे पुत्रादिभी रोदितव्यम्-(२) । अनुभाविनां पुत्रादीनां वपनम् । रात्रौ चेत् दहनं श्वस्तनी वपनक्रिया । "वपनं नेष्यते रात्रौ श्वस्तनी वपन क्रिया" इति संग्रहोक्तेः ।

अर्धदग्धे प्रेते अन्त्यजादिभिश्चितायाः स्पर्शे धेनुत्रयम् प्राय-

---

आमपिष्टं च नैवेद्यं क्षीरं च विनिवेदयेत् ॥
सौवर्णं शक्तितो नागं गां च दद्याद् द्विजन्मने ।
कृताञ्जलिस्ततो ब्रूयात् प्रीयतां नागराडिति ॥
पुनस्तेषां प्रकुर्वीत नारायणबलिक्रियाम् ।
तया लभन्ते स्ववासं मुच्यन्ते सर्वपातकैः ॥ इति ।

इति नागदष्टविधिः ।

( १ ) आदिपुराणे—

निश्शेषस्तु न दग्धव्यः शेषं किञ्चित्त्यजेत्ततः ।
गच्छेत प्रदक्षिणाः सप्त समिद्भिः सप्तभिः सह ॥
देयाः प्रहाराः सप्तैव कुठारेणोल्मुकोपरि ।
क्रव्यादाय नमस्तुभ्यमिति जप्यं समाहितैः ॥
नावेक्षितव्यः क्रव्यादो गन्तव्या च ततो नदी । इति ।

( २ ) रोदितव्यं ततो गाढं तेन तस्य सुखं भवेत् ।
इति गारुडोक्तेः ।

"अर्धे दग्धेऽथवा पूर्णे स्फोटयेत्तस्य मस्तकम् । गृहस्थानां तु काष्ठेन, यतीनां श्रीफलेन च" ॥ ( यतीनां श्रीफलेन पूर्वमेव भित्त्वा गङ्गायां निक्षिपेत् ) इत्यादिना काष्ठेन मस्तकभेदनं कृत्वा "अस्मात्त्वमिति मन्त्रेण आज्याहुतिं विधाय ततो रोदनमुक्तं गारुडे । परंतु मस्तकभेदनादिकाचरणं पर्वतीयानां नास्ति । कात्यायनोक्तमात्रस्यैव तैस्साकल्येनानुष्ठीयमानत्वात् ।

श्चित्तम् । प्रेतस्यैव साक्षाच्चण्डालादिस्पर्शे १९धेनवः । अत्र चिताचाण्डालाग्न्यादयो देवलवचनेन निषिद्धा न ग्राह्याः । पर्युषितशवदाहे ३धेनवः । कपोतावशेषं शरीरं ज्ञात्वा ऽवशिष्ट-भागमादाय नूतनवस्त्रेणावेष्ट्य 'ॐधर्माय नम' इति मन्त्रेणअप्सु-प्रक्षिपेत् ।

ततोऽस्थिसञ्चयनम् ।	एतच्च—

प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा ।
अस्थिसञ्चयनं कार्यं दिने तद्गोत्रजैः सह ॥

इति संवर्तवचनात्—

अपरेद्युस्तृतीये वा दाहानन्तरमेववा ।

इति पद्धतिवचनात् समाचाराच्च दाहानन्तरमेव अनुष्ठीयते । चितां जलेन शान्तां कृत्वा अस्थीनि सञ्चिष्यन् तन्निमित्तकं श्राद्धं कुर्यात् ।

स्थाने द्वारेऽर्धमार्गे च चितायां शवहस्तके ।
अस्थिसंचयने षष्ठो दश पिण्डा दशाहिकाः ॥

इति गारुडवचनात् ।

सन्निहितयोग्यभूमौ कर्मपात्रं सम्पाद्याचम्य सङ्कल्पं कुर्यात् । अद्येह अमुकगोत्रस्यामुकप्रेतस्यास्थिसञ्चयननिमित्तकं श्राद्धमहं करिष्ये । अपसव्यं कृत्वा आसनार्थे कुशं दत्त्वा अद्येह अमुकगोत्रामुकप्रेत इदमवनेजनं तत्रोपतिष्ठताम् । पूर्वं सुरक्षितं यवपिण्डं गृहीत्वा अद्येह अमुकगोत्रामुकप्रेतास्थिसञ्चयनश्राद्धे एष पिण्डो मद्दत्तस्तवोपतिष्ठताम् । अद्येहामुकगो० इदं प्रत्यवनेजनं त० । अद्येहामुकगो० पिण्डार्चनविधाविमानि गन्धाक्षतपुष्पा-दीनि तवोपतिष्ठन्ताम् । अनादिनिधनो देवः० (पृ०२३।९) इति पठेत् । ततः सर्वैर्ज्ञातिभिः सह गन्धपुष्पादीनि गृहीत्वा 'नमः

क्रव्यादमुख्येभ्यो देवेभ्य' इत्यर्घ्यादिकं दत्त्वा दीपं प्रज्वाल्य पूर्वं स्थापितं बलिं गृहीत्वा—

येऽस्मिन् श्मशाने देवाः स्युर्भगवन्तः सनातनाः ।
तेऽस्मत्सकाशाद् गृह्णीयुर्बलिमष्टाङ्गमक्षयम् ॥
प्रेतस्यास्य शुभाँल्लोकान् प्रयच्छन्तु च शाश्वतान् ।
अस्माकमायुरारोग्यं सुखं च ददतां चिरम् ॥

इति श्मशानवासिभ्यो बलिं सदीपं दत्त्वा विसर्जयेत् । केचित्तु अष्टौ बलीनाहुः । तत्र मूलं चिन्त्यम् ।

(बलिदानानन्तरं पिण्डत्रयदानमुक्तं निर्णयसिन्धौ—

एवं दत्त्वा बलिं चैव दद्यात्पिण्डत्रयं बुधः ।
एकं श्मशानवासिभ्यः प्रेतायैव तु मध्यमम् ॥
तृतीयं तत्सखिभ्यश्च दक्षिणासंस्थमादरात् । इति ।)

ततो गव्येन पयसा अस्थीनि सिञ्चेत् । वाग्यतः पलाशशाखाभ्यां बाहुप्रमाणाभ्यां भस्मतोऽस्थीन्युद्धृत्योद्धृत्याङ्गुष्ठकनिष्ठिकाभ्यामादाय ( दक्षिणोत्तरायतां प्रादेशमात्रदीर्घां चतुरङ्गुलविस्तारां तावदेव निम्नां गर्तस्वरूपां कर्षूं खात्वा तत्र, कुम्भे एव वा कुशानास्तीर्य तदुपरि हरिद्रापीतं वस्त्रखण्डं प्रसार्य ततोऽस्थीनि गव्येन घृतेनाभ्यज्य गन्धवारिणाऽऽसिच्य सर्वौषधिमिश्रितानि कृत्वा—

"आ त्वा मनसाऽनार्तेन वाचा ब्रह्मणा त्रय्या विद्यया पृथिव्यामक्षिकायामपाᳪं रसेन निवपाम्यसौ" (२५।७।७) इति मन्त्रेण "वाक्" इत्यनेनैव वा तत्र निधाय पोटलिकां कृत्वा कुम्भे निधाय तं कुम्भमरण्यं वृक्षमूलं वा नीत्वा भूमौ निखनेत्(१)। तीर्थसन्निधौ तु यथासम्भवं पञ्चगव्येनासिच्य मध्वा-

(१) पलाशवृन्तेनास्थीनि परिवर्त्य परिवर्त्याङ्गुष्ठकनिष्ठिकाभ्या-

ज्यतिलैः संयोज्य मृत्पात्रे निधाय दक्षिणां दिशं पश्यन् "नमोऽस्तु-धर्माय" इति वदन् जलं प्रविश्य "स मे प्रीतोऽस्तु" इत्यभिधाय तीर्थे तत्पात्रं प्रक्षिपेत् । जलादुत्तीर्य सूर्यमवेक्ष्य ब्राह्मणाय यथाशक्ति दक्षिणां दद्यात्(१) ।

तीर्थे दूरस्थिते तत्र अस्थिप्रक्षेपेच्छायां तानि सुरक्षितानि क्वचित् शुचिस्थाने धृत्वा दशाहाभ्यन्तरे अनन्तरं वा यथासम्भवं शौचपूर्वकं तानि तीर्थे नीत्वा मार्गे अशुचिस्पर्शादिदोषे तदनुरूपं प्रायश्चित्तं स्नानपूर्वकं कृत्वा निरुक्तप्रकारेण क्षिपेत् ।

ततोऽङ्गारास्थिभस्मादिकं सर्वं तोये प्रक्षिपेत् । चितास्थलं यथासम्भवं संशोधयेत(२) । ततः श्मशानाद्बालपुरस्सरं सर्वे

---

मादाय पलाशपुटे प्रास्यति १। शम्यवकं च श्मशाने (भस्मकूटे प्रास्यति) २। अक्त्वाऽस्थीनि सर्वसुरभिमिश्राणि दक्षिणपूर्वायतां कर्षूं खात्वा कुशानास्तीर्य वस्त्रावकृत्तं च हारिद्रं वागिति निवपत्यस्मिन् ३। एतद्वाजसनेयकम् ४। अनेनवा ५। "आत्वामनसा० निवपाप्यसौ ६। इति ( का० श्रौ० २५।७।१-२-३-४-५-६ । ) ।

( १ ) अस्थीनि मातापितृवंशजानां नयन्ति गङ्गामपि ये कथंचित् ।
सद्बान्धवस्यापि दयाभिभूतास्तेषां तु तीर्थानि फलप्रदानि ॥
स्नात्वा ततः पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च योज्य ।
ततस्तु मृत्पिण्डपुटे निधाय पश्यन् दिशं प्रेतगणोपगूढाम् ॥
नमोऽस्तु धर्माय वदन् प्रविश्य जलं स मे प्रीत इति क्षिपेच्च ।
उत्थाय भास्वन्तमवेक्ष्य सूर्यं स दक्षिणां विप्रमुखाय दद्यात् ॥ इति ।
दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति ।
गङ्गायां मरणं यादृक् तादृक् फलमवाप्नुयात् ॥

( २ ) प्रेतस्य चितारोपणसमये चितायां पिण्डमदत्त्वा अस्मिन्नवसरे एव केचित् चितापिण्डदानं कुर्वन्ति । तन्न ।
"चितामारोप्य तं प्रेतं पिण्डौ द्वौ तत्र दापयेत् ।
चितायां शवहस्ते च प्रेतनाम्ना खगेश्वर ॥
इत्येवं पञ्चभिः पिण्डैः शवस्याहुतियोग्यता ।

सपिण्डा जलाशयं जिगमिषवः क्रियाकर्तुः स्कन्धे केनचित् एकं जलपूर्णघटं स्थापयेयुः । ततः क्रियाकर्ता पश्चात् अनवलोकयन् 'एवं कदापि माभूदिति वदन् घटं भूमौ पृष्ठतः पातयेत् । ततः पश्चादनवलोकयन्त एकवस्त्रा दक्षिणाभिमुखाः प्राचीनावीतिनः सर्वे ज्ञातिसम्बन्धिनो बालपुरःसरा अन्यं जलाशयं गत्वा योनिसंबद्धं समीपस्थं श्यालकं वा 'उदकं करिष्यामहे' इत्युदकं याचेरन्। ततो योनिसंबद्धः श्यालो वा ऽशतवर्षे प्रेते 'कुरुध्वं मा चैवं पुनर्भूत्' इति प्रतिब्रूयात् । शतवर्षे तु 'कुरुध्वमित्येव । ततः पुत्रादयः सर्वे वामहस्तस्यानामिकया "अप नः शोशुचदघम्" इति (य० सं० ३५।६)मन्त्रेणोदकमपनोद्य (अप्रादक्षिण्येनावर्त्य) तूष्णीं निमज्जन्ति ।

दाहादनन्तरं कार्यं स्त्रीभिः स्नानं ततः सुतैः ।

इति गारुडवचनात् पूर्वं स्त्रीभिः स्नानं कार्यं, ततः पुत्रैस्ततोवृद्धपुरःसरैरन्यैरिति बोध्यम्। ततः कुशजलतिलान गृहीत्वाऽपसव्येनैव 'अद्येहामुकगोत्रामुकप्रेत चितादाहजनिततापतृषोपशमाय एष तिलकुशतोयाञ्जलिर्मद्दत्तस्तवोपतिष्ठताम्' इत्युक्त्वा भूमौ सकृदुदकं सर्वे प्रक्षिपेयुः ।

---

प्रेते दत्त्वा पञ्च पिण्डान् हुतमादाय तं तृणैः ॥
आग्निं पुत्रस्तदा दद्यात्" इति गारुडविरोधात् । किन्तु प्रेतोपकारविशेषेच्छायां चितायां पिण्डं प्रेतस्य चितारोपणसमये एव दत्त्वा अस्थिसञ्चयननिमित्तकपिण्डत्रयान्तर्गतं—

गर्तं विधाय तत्रास्थिपात्रं संस्थापयेत् खग ।
तस्योपरि ततो दद्यात् पिण्डं दाहार्तिनाशनम् ॥

इति गारुडोक्तविधानेन पिण्डं दद्यात्। ततः पूर्वोक्तं बलिं च पुनर्दद्यात् ॥ इति । पर्वतीयसमाचारस्तु अस्थिसंचयनश्राद्धे एकस्यैव पिण्डदानस्येति बोध्यम् ।

(एकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकयाऽपनोद्य "अप नः शोशुचदघमिति दक्षिणामुखा निमज्जन्ति प्रेतायोदकꣳ सकृत्प्रसिञ्चन्त्यञ्जलिना "असावेतत्त उदकमिति" इति पारस्करवचनात्।)

असपिण्डानां प्रेतस्पर्शानुगमात्सचैलं स्नानं कामोदकदानं च। सपिण्डैः प्रथमतृतीयपञ्चमसप्तमनवमदिनेषूदकदानं कार्यम्। पुत्रस्तु प्रतिदिनमञ्जलिवृद्ध्या दशादिनावधि कार्यम्। दाहकर्ता जलादुत्तीर्य शुष्कवस्त्रं परिधाय आर्द्रवस्त्रं सकृन्निष्पीड्य शोषणायोदग्दशं प्रसारयेत्। ततः शाद्वलभूमौ उपविष्टान् इतिहासादिभिः संसारस्यानित्यतां दर्शयन्तः सुहृदः शोकमपनुदेयुः। इतिहासवाक्यं स्मरन्तः पश्चादनवलोकयन्तो बालपुरस्सराः पुत्रादयो रात्रौ मरणे आदित्यदर्शनादूर्ध्वं(१) ग्रामं प्रविशेयुः। दिवामरणे तु नक्षत्रदर्शनादूर्ध्वम्।

ग्रामं प्रविश्य गृहद्वारमागत्य स्थित्वा निम्बपत्राणि विदश्याचम्योदकं गोमयमग्निं गौरसर्षपान् तैलं च क्रमेण संस्पृश्य अश्मानमाक्रम्य गृहं प्रविशेयुः।

"अनवेक्षमाणा ग्राममायान्ति रीतीभूताः कनिष्ठपूर्वाः निवेशनद्वारे पिचुमन्दपत्राणि विदश्याचम्योदकमग्निं गोमयं गौरसर्षपाँस्तैलमालभ्याश्मानमाक्रम्य प्रविशन्ति" इति पारस्करवचनात्।

स्त्रीजनोऽग्रे गृहं गच्छेत् पृष्ठतो नरसञ्चयः।

इति गारुडात् स्त्रियः पूर्वं गच्छेयुः॥

---

(१) "प्रेतस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्रदर्शनात् रात्रौ चेदाऽऽदित्यस्य" इति पारस्करवचनात् प्रेतकार्यानन्तरं यद्यपि रात्रौ ग्रामप्रवेशो निषिद्धः तथाऽपि "रात्रौचेदाऽऽदित्यस्य" इत्यनन्तरं "ब्राह्मणानुमत्या वा" इति शुद्धितत्त्वे (३१९ पृ०) हारीतवचनात् ब्राह्मणानुमतिं गृहीत्वा रात्रावपि प्रविशेयुः।

दूर्वाङ्कुरं शिरस्याधायोपलिप्ते गृहे पृथक्पृथक् तृणशय्यामास्तीर्य पुत्रादय उपविशेयुः। पुत्रः पत्नीअन्यो वा दाहकर्ता तद्दिने उ(१)पवासं कुर्यात्। बालवृद्धादयस्तु यथाशक्ति एकभक्तादिकं कुर्युः। त्रिरात्रं ब्रह्मचारिणोऽधःशायिनो भवेयुः। पुत्रादयः पिण्डं दत्त्वा दिवाऽन्नमश्नीयुः(२) न किञ्चन कर्म कुर्युः। क्रीतलब्धाशना भवेयुः। अक्षारलवणान्नमश्नीयुः। पुत्रादीनां यावदाशौचमेते नियमाः। अन्येषां त्रिरात्रम्। आशौचमध्ये मलिनाः सर्वभोगविवर्जिता भवेयुः। रात्रौ लगुडहस्ता भूमिशय्याः पृथक्पृथक् स्वपेयुः (स्वप्युः)। यस्मिन्नहनि मृतस्तस्मिन्नहनि क्षीरोदके विहायसि निदध्युः।

"मृन्मये ताꣳ रात्रीं क्षीरोदके विहायसि निदध्युः प्रेतात्र स्नाहीति" पारस्करः। "प्रेतात्र स्नाहि इदं पिबेति। द्रव्यद्वयविधानसामर्थ्याद्भिन्नपात्रयोर्निधानं, योग्यत्वाच्च पाने पयसो विनियोग" इति विज्ञानेश्वरः (या०स्मृ०३।१७)। तद्दिनमारभ्य दशरात्रपर्यन्तं प्रेतहिताय शिवालये चैत्यवृक्षमूले क्रियाकर्तुः समीपे च दीपान्निदध्युः।

पुत्रादिः दशाहिकक्रियारम्भदिनात्पूर्वदिने उपोषितः कृतफलाहारो वा प्रदोषे मृन्मये पात्रे तिलतैलेन (३)दीपं प्रज्वलय्या-

---

(१) देवजानीयकारिकायाम्—

उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य वा भवेत्।
दिवाचैव तु भोक्तव्यममांसं मनुजर्षभ॥

इति वचनात्।

(२) "दिवाऽन्नमश्नीयुरमांसम्" इति (पा०कां०३।१०) गृह्यात्।

(३) देवजानीये कारिकायाम्।

तत्र प्रेतोपकृतये दशरात्रमखण्डितम्।
कुर्यात्प्रदीपं तैलेन वारिपात्रं च मार्तिकम्॥ इति।

चम्य हस्ते जलादिकं गृहीत्वा सङ्कल्पयेत्—अद्येहामुकगोत्रस्यामुकप्रेतस्य यममार्गसन्तरणे घोरान्धकारानिवृत्त्यर्थमद्यारभ्य दशमदिनक्रियापर्यन्तमेषोऽनवच्छिन्नदीपो मद्दत्तस्तवोपतिष्ठताम् इति सङ्कल्प्य धान्योपरि दक्षिणाभिमुखं स्थापयेत् ।

"प्राङ्मुखोदङ्मुखं दीपं देवागारे द्विजालये ।
कुर्याद्याम्यमुखं पित्र्ये अद्भिः संकल्प्य सुस्थिरम्" ॥

इति नि० गारुडात् ।

दशरात्रपर्यन्तं बान्धवैः सह भोजनं कार्यम् ।

(१) अथ पिण्डदानाधिकारी लगुडहस्तः प्रागुदीच्यां दक्षिण-

---

(१) शुद्धितत्त्वे आदिपुराणे—

प्रथमेऽहनि यो दद्यात् प्रेतायान्नं समाहितः ।
यत्तान्नवसु चान्येषु स एव प्रददात्यपि ॥
मृन्मयं भाण्डमादाय नवं स्नातः सुसंयतः ।
लगुडं सर्वदोषघ्नं गृहीत्वा तोयमानयेत् ॥
ततश्चोत्तरपूर्वस्याम् अग्निं प्रज्वलयेद्दिशि ।
तण्डुलप्रसृतिं तत्र त्रिः प्रक्षाल्य पचेत्स्वयम् ॥
सपवित्रैस्तिलैर्मिश्रं केशकीटादिवर्जितम् ।
द्वारोपान्ते ततः क्षिप्त्वा शुद्धां वै गौरमृत्तिकाम् ॥
तत्पृष्ठे संस्तरेद् दर्भान् याम्याग्रान् देशसम्भवान् ।
ततोऽवनेजनं दद्यात् संस्मरन् गोत्रनामनी ॥
तिलसर्पिर्मधुक्षीरैः संश्रितं तप्तमेवहि ।
दद्यात् प्रेताय पिण्डन्तु दक्षिणाभिमुखः स्थितः ॥
फलमूलगुडक्षीरतिलमिश्रन्तु कुत्र चित् ।
अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैस्तोयैः सुशीतलैः ॥
ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् ।
प्रयाति यावदाकाशं पिण्डाद् बाष्पमयी शिखा ॥
तावत् तत्सम्मुखस्तिष्ठेत् सर्वं तोये ततः क्षिपेत् ।
दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु ॥

स्यां वा दिशि तीर्थादिकं प्रातर्मध्याह्नयोर्मध्ये पिण्डदानार्थं गच्छेत् ।

सद्यःशौचे तु दातव्याः सर्वेऽपि युगपत्तथा ।
त्र्यहाशौचे प्रदातव्याः त्रयः पिण्डाः समाहितैः ॥
द्वितीये चतुरो दद्यादस्थिसंचयनं तथा ।
त्रींस्तु दद्यात् तृतीयेऽह्नि वस्त्रादि क्षालयेत्ततः ॥
दशाहेऽपि च दातव्याः प्रथमेत्वेक एव हि ।
एकस्तोयाञ्जलिस्त्वेवं पात्रमेकं च दीयते ॥
द्वितीये द्वौ तृतीये त्रीन् चतुर्थे चतुरस्तथा ।
पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्तचैवहि ॥
अष्टमेऽष्टौ च नवमे नव वै दशमे दश ।
येन स्युः पञ्चपञ्चाशत् तोयस्याञ्जलयः क्रमात् ॥
तोयपात्राणि तावन्ति संयुक्तानि तिलादिभिः । इति ।

अत्र स एवेत्येवकारात् प्रथमपिण्डदातैव दशपिण्डदानेऽधिकारीति दर्शयति । तेन पुत्रादेरसन्निधाने यद्यन्येन प्रथमपिण्डो दत्तः तदा दशाहमध्ये पुत्रादेरागमने ऽपि दशाहिकपिण्डदानं पुत्रादिना न कर्तव्यम् । तदतिरिक्तम् एकादशाहिकादिकं सर्वं पुत्रादिः कुर्यात् ।

असगोत्रः सगोत्रो वा यदि स्त्री यदिवा पुमान् ।
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत् ॥

इति आश्वलायनगृह्यपरिशिष्टाच्च । नच भरतेन पिण्डदानोत्तरमपि

पेङ्गुदं बदरीमिश्रं पिण्याकं दर्भसंस्तरे ।

इत्यादिना अयोध्याकाण्डे रामपिण्डदातृश्रवणात् प्रधानाधिकारिणा पुनर्दश पिण्डा देया इति प्रतीयते इति वाच्यम् ।

भरतश्चेत् प्रतीतः स्यात् राज्यं प्राप्येदमुत्तमम् ।
प्रेतार्थं यत् स मे दद्यात् मा मां तत् समुपागमत् ॥

इति दशरथशापात् भरतकृतस्य अकृतत्वस्मरणेन पुनस्तत्करणात् इति ।

पिण्डदानं च जलसमीपे कार्यम् इत्युक्तं मत्स्यपुराणे—

प्रेतीभूतस्य सततं भुवि पिण्डं जलं तथा ।
सतिलं सकुशं दद्यात् बहिर्जलसमीपतः ॥ इति ।

कूपे तडागे वाऽऽरामे तीर्थे देवालयेऽपिवा ।
गत्वा मध्यमयामेतु स्नानं कुर्यादमन्त्रकम् ॥
इति गारुडात् ।

ततो जलाशयसमीपे शुद्धां भूमिं दक्षिणाप्रवणां सम्पाद्य तदीशानभागे चुल्लीं विधाय ततो गोरमृत्तिकया दक्षिणाप्रवणां हस्तैकां वेदिं निर्माय गोमयेनोपलिप्य सर्वां पिण्डदानसामग्रीं सम्पाद्य (१) अपसव्यं कृत्वा कुशादिकं गृहीत्वा देशकालौ स्मृत्वा अमुकगोत्रस्यामुकप्रेतस्य (अमुकगोत्राया अमुकप्रेतायाः) करिष्यमाणप्रथमदिनकृत्यार्थे स्नानमहं करिष्ये इति सङ्कल्प्य शिखां विमुच्य स्नानं कृत्वा शिखां बध्वाचम्य पाषाणखण्डोपरि वक्ष्यमाणप्रकारेण तिलतोयाञ्जलिन्दद्यात्(२) । हस्ते तिलकुशोदकानि गृहीत्वा अपसव्यं कृत्वा दक्षिणाभिमुखो भूत्वा अमुकगोत्रामुकप्रेत ( अमुकगोत्रे अमुकप्रेते ) चितादाहजनिततापतृषोपशमनाय प्रथमदिनसम्बन्धी एष तिल-

---

(१) "एकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकयाऽपनोद्य 'अप नः शोशुचदघामिति दक्षिणामुखा निमज्जन्ति" इति पारस्करेण प्रेतस्नाने अपसव्यादेर्विधानात् ।

(२) निर्णयसिन्धौ स एव ( प्रचेताः )
"नदीकूलं ततो गत्वा" इत्युक्त्वा
सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय प्रेते दद्याद्दशाञ्जलीन् ॥
दिने दिनेऽञ्जलीन्पूर्णान् प्रदद्यात्प्रेतकारणात् ।
तावद्वृद्धिश्च कर्तव्या यावत्पिण्डः समाप्यते ॥ इति ।
अत्र सर्वत्र प्रेतकार्ये ऋजुदर्भा एव विनियोज्याः ।
सपिण्डीकरणं यावत् ऋजुदर्भैः पितृक्रिया ।
सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत ॥
इति विष्णुपुराणीयवचनात् ।

तोयाञ्जलिर्मद्दत्तस्तवोपतिष्ठताम् इति । अञ्जलिदानानन्तरम् ॐयमाय नमः ३, धर्मराजाय नमः ३, मृत्यवे नमः ३, अन्तकाय नमः ३, वैवस्वताय नमः ३, कालाय नमः३, सर्वभूतक्षयाय० ३, औदुम्बराय० ३, दध्नाय० ३, नीलाय०३, परमेष्ठिने० ३, वृकोदराय नमः ३, चित्राय नमः ३, चित्रगुप्ताय नमः ३, इति यमतर्पणं(१) कृत्वा जलाद्बहिर्निर्गम्याहते धौते वाससी धारयित्वा दक्षिणादिशि शिक्यादौ त्रिकाष्ठ्युपरि वा मध्यविहितच्छिद्रं क्षरणार्थावलम्बितसूत्रं मृत्कुम्भं स्थापयेद्वक्ष्यमाणमन्त्रेण ।

आकाशे तु निरालम्बो वायुभूत निराश्रय ।
प्रेत घटो मया दत्तस्तवैष उपतिष्ठताम् ॥ इति ।

---

(१) आशीर्वादं देवपूजां प्रत्युत्थानाभिवादनम् ।
पर्यङ्के शयनं स्पर्शं न कुर्यान्मृतसूतके ॥
सन्ध्यां दानं जपं होमं स्वाध्यायं पितृतर्पणम् ।
ब्रह्मभोज्यं व्रतं नैव कर्तव्यं मृतसूतके ॥

इति गारुडवचनेन यद्यपि पितृतर्पणं निषिद्धं तथापि प्रेतकार्ये प्रेतराजो यमस्य तर्पणं न निषेधार्हमिति तत्सहचरितमपि तत्स्नानाङ्गत्वेनानुष्ठीयते एव समाचारात् इति बोध्यम् ।

एवं सन्ध्योपासनमपि—

सूतके मृतके कुर्यात्प्राणायामममन्त्रकम् ।
तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ॥
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।
मार्जनं तु न वा कार्यमुपस्थानं न चैव हि ॥

इति भारद्वाजादिवचनैः संक्षेपेण कार्यमेव । तच्च प्रेतकृत्यान्ते स्नानं कृत्वा कार्यम् । तत्र सन्ध्याशुचित्वानपेक्षणात् । प्रेतस्नानानन्तरं प्रेतकृत्यविधानाच्च ।

ततो जलं दुग्धं च कस्मिंश्चिन्मृन्मयपात्रे गृहीत्वा—

चिताऽनलप्रदग्धोऽसि परित्यक्तोऽसि बान्धवैः ।

इदं नीरमिदं क्षीरमत्र स्नाहि इदं पिब ॥

इति स्थापितकुम्भे क्षिपेत्(१) । (स्त्रियामप्यविकृत एव पाठ्यः) । ततो दन्तधावनकाष्ठं गृहीत्वा अमुकगोत्रामुकप्रेत (अमुकगोत्रेऽमुकप्रेते) प्रथमदिनसम्बन्धि एतत् दन्तधावनकाष्ठं तवोपतिष्ठताम् इति दद्यात् । ततः पिण्डदानस्थले समुपविश्य सव्येनाचम्य नवे मृन्मये पात्रे प्रसृतिमात्रतण्डुलान् द्विस्त्रिर्वा प्रक्षाल्य हविः श्रपयित्वा दीपं प्रज्वलयेत् । ततोऽपसव्येन तिलसर्पिर्मधुयुतं पिण्डं निर्माय मध्वञ्जलिं च निर्माय तूष्णीं वामभागे एकशिखं पवित्रं स्थापयित्वा तदुपरि मृन्मयं पत्रपुटकं वा कर्मार्थं संस्थाप्य तस्मिन्नेकशिखं पवित्रं(२) दत्त्वा जलेनापूर्य गन्धाक्षततिलान्निक्षिप्य तज्जलमादायैकं कुशं गृहीत्वा देशकालौ स्मृत्वा अमुकगोत्रस्यामुकप्रेतस्य (अमुकगोत्राया अमुकप्रेतायाः) प्रेतत्वविमुक्तये उत्तमलोकप्राप्त्यर्थं रौरवनामनरकोत्तारणाय मूर्धावयवनिष्पत्त्यर्थं प्रथमदिननिमित्तकं पूरकपिण्डप्रदानमहं करिष्ये इति प्रतिज्ञाय कुशजलमादाय अद्येहामुकगोत्रामुकप्रेत (अमुकगोत्रेऽमुकप्रेते) (३)इदमा-

---

(१) अपक्वं मृन्मयं पात्रं क्षीरनीरप्रपूरितम् ।
काष्ठत्रयं गुणैर्बद्धं धृत्वा मन्त्रं पठेदिमम् ॥
चितानलप्रदग्धोऽसि परित्यक्तोऽसि बान्धवैः ।
इदं नीरमिदं क्षीरमत्र स्नाहि इदं पिब ॥ इति गारुडे ।

(२) "अथैकोद्दिष्टम्—एकोऽर्घः एकं पवित्रं नावाहनं नाग्नौकरणं नात्र विश्वेदेवा" इति कात्यायनश्राद्धकल्पसूत्रे एकोद्दिष्टे एकशिखपवित्रविधानात् ।

(३) "असंस्कृतानां भूमौ पिण्डं दद्यात्संस्कृतानां कुशेषु" इति पिण्डासनार्थे कुशदानस्य प्रचेतसा निर्णयसिन्धौ विधानात् ।

सनं तवोपतिष्ठताम् । पुनः कुशजलमादाय अद्येह अमुकगोत्रामुकप्रेत ( अमुकगोत्रेऽमुकप्रेते ) इदम् अवनेजनं तवोपतिष्ठताम् इत्यवनेजनं दत्त्वा वासुदेवं स्मरन् पिण्डं गृहीत्वा वामं जानु निपात्य अमुकगोत्रामुकप्रेत ( अमुकगोत्रेऽमुकप्रेते ) रौरवनामनरकोत्तारणार्थं मूर्धावयवनिष्पत्त्यै एष पूरकपिण्डो(१) मद्दत्तस्तवोपतिष्ठताम् । अमुकगोत्रामुकप्रेत ( अमुकगोत्रेऽमुकप्रेते ) इदं प्रत्यवनेजनं तवो० । एतत्ते शीतलोदकमुपतिष्ठताम् । अयं ते गन्ध उ० । एते अक्षतास्तवो० । इदं भृङ्गराजपत्रं तवो० । एष ते धूप उ० । अयं ते दीप उ० । इदमूर्णासूत्रं तवोप० । अयं ते मध्वन्नबलिः० । तिलकुशजलान्यादाय अमुकगोत्रामुकप्रेत ( अमुकगोत्रेऽमुकप्रेते ) पिण्डार्चनविधौ इमे गन्धाक्षतभृङ्गराजपत्रधूपदीपोर्णासूत्रमध्वन्नबलयो मद्दत्तास्तवोपतिष्ठन्ताम् । ततस्तिलतोयपात्रं सम्पाद्य हस्ते गृहीत्वा अमुकगोत्रामुकप्रेत ( अमुक-

---

"तदग्रे च ततो दत्त्वा पिण्डार्थं कौशमासनम्" इति गारुडाच्च । अवनेजनं तु आसनशोधनं जलं नतु तदासनमिति न तेन तस्य कृतार्थतेति बोध्यम् । गारुडे तु अतः पूर्वं कौशद्विजस्य स्थापनपूर्वकं पूजनमप्युक्तम् ।

(१)दद्यात्तण्डुलपाकेन यवपिष्टेन वा सुतः ।
उशीरं चन्दनं भृङ्गराजपुष्पं निवेदयेत् ॥
धूपं दीपं च नैवेद्यं मुखवासं च दक्षिणाम् ।
काकान्नं पयसोः पात्रे वर्धमानजलाञ्जलीन् ॥
प्रेतायामुकनाम्ने च मद्दत्तमुपतिष्ठतु ।
इति गारुडे पिण्डदानविधानमुक्तम् ॥

काकान्नं बलिः । पयसोः पात्रे नीरक्षीरयोः पात्रे । अन्यच्च दन्तधावनकाष्ठम् । तत्र जलाञ्जल्यादयः आर्थक्रमात् पूर्वमनुष्ठेयाः ।

पारस्करगृह्येतु "दिवाऽन्नमश्नीयुरमांसं पिण्डं दत्त्वाऽवनेजनदानप्रत्यवनेजनेषु नामग्राहम्" इत्येतावन्मात्रमुक्तम् ।

गोत्रेऽमुकप्रेते ) चितादाहजनिततापतृषोपशमाय प्रथमदिनसम्बन्धि एतत्तिलतोयपात्रम् मद्दत्तं तवोप० । करसम्पुटं कृत्वा—

अनादिनिधनो देवः शङ्खचक्रगदाधरः ।

अव्ययः पुण्डरीकाक्ष प्रेतमोक्षप्रदो भव ॥ इत्युच्चार्य पिण्डादिकं सतिलोदकं सर्वं प्रेताप्यायनमस्तु इत्युक्त्वा सर्वं जले प्रक्षिपेत् । स्त्रियामपि प्रेतमोक्षप्रद इत्येव पठनीयमिति पूर्वं निर्णीतम् (२५।२०) ।। (१)ततः स्नात्वा अशक्तौ मार्जनं कृत्वा वा शुद्धे वाससी धारयित्वा मनसा सन्ध्यां कृत्वा बालपुरस्सरं गृहं गच्छेत्(२) ।

---

(१) मिताक्षराटीकायां बृहस्पतिः,

"एकोद्दिष्टानां सर्वेषामवसाने ऽवगाहनं कुर्यात् प्रेतमुद्दिष्टं सपिण्डीकरणं विना" इति ।

गारुडेऽपि "अनादिनि० प्रदो भव"

इति सम्प्रार्थनामन्त्रं श्राद्धान्ते प्रत्यहं पठेत् ।

इत्युक्त्वा–स्नात्वा गत्वा गृहं दत्त्वा गोग्रासं भोजनं चरेत्–

इति एकादशाध्यायान्ते उक्तम् ।

विप्रो दशाहमासीत वैश्वदेवविवर्जितः ।

इति संवर्तवचनात् वैश्वदेवो निषिद्धः ।

अतो 'गोग्रासं दत्त्वा भोजनं चरेत्' इत्युक्तम् ।

( २ ) पूरकपिण्डप्रदानं च पूर्वाह्न एव कार्यम् ।

स्थण्डिले प्रेतभागं तु दद्यात् पूर्वाह्णएवतु ।

कृत्वा तु पिण्डसङ्कल्पं नामगोत्रेण सुन्दरि ॥

इति निर्णयसिन्धौ वाराहोक्तेः ।

भविष्ये—ओदनामिषसक्तूनां शाकमूलफलादिषु ।

प्रथमेऽहनि यद्दद्यात् तद्दद्यादुत्तरेऽहनि ॥

गृहद्वारे श्मशाने वा तीर्थे देवगृहेऽपिवा ।

यत्राद्ये दीयते पिण्डस्तत्र सर्वं समाचरेत् ॥ इति ।

ब्राह्मे—शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा ।

द्वितीयेन तु कर्णाक्षिनासिकाश्च समागताः ॥

गलास्यभुजवक्षांसि तृतीयेन यथाक्रमम् ।
चतुर्थेन तु पिण्डेन नाभिहृल्लिङ्गपायुच ॥
जानू जङ्घे च पादौ च पञ्चमेन तु सर्वदा ।
सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः ॥
नखलोमान्यष्टमेन वीर्यन्तु नवमेन च ।
दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः ॥ इति ।
आशौचस्य ह्रासेऽपि पिण्डा दशैव देयाः ।
आशौचस्य च ह्रासेऽपि पिण्डान्दद्याद्दशैव तु ।
इति शातातपोक्तेः ।

सद्यःशौचे युगपद्देया अपि सर्वे पिण्डाः पृथक्पृथगेव देयाः, नतु साम्नायवत् तन्त्रेण । "शिरस्त्वाद्येन पिण्डेनेत्यादिवचनैः दीयमानत्वविशिष्टापेक्षाबुद्धिजन्यदशत्वावच्छिन्नानामेव शरीरोत्पादकत्वात् ।

उत्तरीयादिविपर्यासे तु सर्वस्यास्य कर्मण आवृत्तिः ।
उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये ।
पूर्वदत्ताञ्जलीन्दद्यात् पूर्वपिण्डांस्तथैवच ॥
इति गृह्यकारिकावचनात् ।
अन्ये तु पात्रैकत्वं न सहन्ते ।

"नवान्यादाय भाण्डानि आरुकं चरुकं तथा—
इतिप्राचेतसोक्तेः । समाचारोऽपि एवमेव दृश्यते ।

"पत्न्याः कर्तृत्वे रजोदर्शने च तदन्ते कुर्यात् । "शावाद्द्विगुणमार्तवम्" इत्युक्तेः । आशौचान्त आर्तवे तु अन्येन सर्वा क्रिया आवर्तनीया कर्तुर्विपर्ययात्, कालातिक्रमायोगाच्च" इति निर्णयसिन्धौ ।

"भर्तुः पिण्डप्रदाने तु भवेन्नारी रजस्वला ।
वस्त्रं त्यक्त्वा पुनः स्नात्वा सैव दद्यात्तु पूरकम् "॥

इति शातातपवचनेन आशौचान्ते आर्तवे आशौचकाले रजस्वलाशुद्ध्यसम्भवात् आशौचकालकर्तव्यपिण्डदानानुरोधेन स्नानमात्रेण शुद्धिं सम्पाद्य भर्तुः पिण्डदानं सैव कुर्यात्" इति शुद्धितत्त्वे ( ३३४ पृष्ठे ) । अत्राद्यपक्ष एवास्मत्संमतः ।

दशाहमध्ये दर्शपाते तु गौतमः—
अन्तर्दशाहे दर्शश्चेत् तत्र सर्वं समापयेत् ।
पित्रोस्तु यावदाशौचं दद्यात् पिण्डाञ्जलाञ्जलीन् ॥ इति ।

दशस्वपि दिनेष्वयमेव विधिः । अङ्गसम्भूतिनरकाद्यूहस्तु पृथक्कार्यः । उत्तरोत्तरं च अञ्जलिवृद्धिस्तिलतोयपात्रवृद्धिश्च कर्तव्या । यथा द्वितीयदिने द्वावञ्जली, तृतीये ३, चतुर्थे ४, पञ्चमे ५, षष्ठे ६, सप्तमे ७, अष्टमे ८, नवमे ९, दशमे १० मिलिताः सर्वे पञ्चपञ्चाशद्भवन्ति । एवं तिलतोयपात्राण्यपि ।

द्वितीयदिने योनिपुंसनामनरकोत्तारणाय चक्षुःश्रोत्रनासानिष्पत्त्यर्थं द्वितीयदिननिमित्तकं पूरकपिण्डप्रदानमहं करिष्ये इति ।

तृतीयदिने महारौरवनामनरकोत्तारणाय भुजवक्षोग्रीवामुखावयवनिष्पत्त्यर्थं तृतीयदिननिमित्तकं पूरकपिण्डप्रदानमहं क०

चतुर्थे तामिस्रनामनरकोत्तारणाय हृदयनाभिवस्तिलिङ्गगुदावयवनिष्पत्त्यर्थं चतुर्थदिननिमित्तकं पूरक० ।

---

गङ्गामरणादिना ज्ञानं प्राप्य ब्रह्मभावं गतस्याऽपि और्ध्वदेहिकी क्रिया तदधिकारिणा अवश्यं कर्तव्या । नित्यत्वात् ।

तथाच श्रीमद्भागवते—

कृष्णएवं भगवति मनोवाग्दृष्टिवृत्तिभिः ।
आत्मन्यात्मानमावेश्य सोऽन्तःश्वास उपारमत् ॥
सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले ।
सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये ॥
तस्य निर्हरणादीनि सम्परेतस्य भार्गव ।
युधिष्ठिरः कारयित्वा मुहूर्तं दुःखितोऽभवत् ॥ इति ।

हेभार्गव हेशौनक कृष्णे आत्मनि परमात्मनि आत्मानं स्वीयात्मानं निवेश्य एकीकृत्य स भीष्मः उपारमत् मुक्तिं गतवान् । एवं ब्रह्मणि सम्पद्यमानं भीष्मम् आलक्ष्य तस्य निर्हरणादीनि संस्कारान् युधिष्ठिरः मुक्तस्याऽपि अकारयत् । एवं च एतेषामपि तत्तत्कर्मणि तत्तद्वचनोपात्तप्रेतपदस्य पितृपदस्य च मन्त्रादिषु यथायथं वाचनिकत्वात् प्रयोगः संगच्छते इति शुद्धितत्त्वे ( ३०० पृष्ठे )।

संन्यासिनस्तु न कर्तव्येति वक्ष्यते ।

पञ्चमे अन्धतामिस्रनामनरकोत्तारणाय स्फिगूरुजानुजङ्घा-चरणावयवनिष्पत्त्यर्थं पञ्चमदिननिमित्तकं पूर० ।

षष्ठे सम्भ्रमनामनरकोत्तारणाय सर्वमर्मनिष्पत्त्यर्थं षष्ठदिन-निमित्तकं पूरक० ।

सप्तमे अमेध्यकृमिसम्पूर्णनामनरकोत्तारणाय अस्थिमज्जा-शिरावयवनिष्पत्त्यर्थं सप्तमदिननिमित्तकं पूरक० ।

अष्टमे पुरीषभक्षणनामनरकोत्तारणाय नखरोमावयवनिष्प-त्त्यर्थमष्टमदिननिमित्तकं पूरक० ।

नवमे स्वमांसभक्षणनामनरकोत्तारणाय वीर्यनिष्पत्त्यर्थं न-मदिननिमित्तकं पू० ।

दशमदिने कुम्भीपाकनामनरकोत्तारणाय तृप्तताक्षुत्पिपासा-निष्पत्त्यर्थं दशमदिननिमित्तकं पूरकपिण्डदानमहं करिष्ये इति(१)।

(२)नवमदिने सायङ्काले कम्बलादीनि महान्ति वस्त्राणि क्षा-लनार्थं रजकगृहे दत्त्वाऽवशिष्टानि दशमदिने स्वयं क्षालयेत्। द-शमदिने गृहलेपनपूर्वकं धातुपात्राणि भस्मादिना संशोध्य मृन्मया-नि त्यक्त्वा स्वसपिण्डैः स्त्रीभिः प्रथदिनस्थापितदीपेनच सह स्ना-नोदकदानार्थं स्त्रीबालपुरःसरं जलाशयं गत्वा स्नात्वा पूर्ववत् दश जलाञ्जलीन् दत्त्वा पाषाणखण्डं जले प्रवाह्य यमतर्पणं कृत्वा बहि-

(१) दशाहे विषमदिनेषु (१-३-५-७-९) आमेन नवश्राद्धा-भिधानानि श्राद्धानि पूरकपिण्डश्राद्धेभ्यो भिन्नानि आश्वलायन-परिशिष्टे अभिहितानि। पारस्करगृह्ये तु "दिवाऽश्नीयुरमांसं पिण्डं दत्त्वाऽवनेजनदानप्रत्यवनेजनेषु नामग्राहम्" इत्येतावन्मात्रस्यैव दशाहे कर्तव्यतयोपदेशात् तद्भाष्यकारहरिहरादिभिः पद्धतिष्वनुल्लेखात्स-माचाराभावाच्चास्माभिर्न निर्दिष्टानीति बोध्यम् ।

(२) नवमे वाससां त्यागो नखरोम्णां तथाऽन्तिमे ।
इति निर्णयसिन्धौ बृहस्पतिस्मृतेः ।

निर्गम्य नीरक्षीरे दन्तकाष्ठं च दत्त्वा पाकं निर्वर्त्य कृसरं च माषमिश्रं पाकार्थमधिश्रित्य पिण्डदानं तिलतोयपात्रदानं च कृत्वा जले सर्व्वं प्रक्षिप्य स्वर्णरौप्ययुतकाष्ठकुद्दालेन प्रथमदिनकृतां वेदिं पाषाणादिना प्रथमदिनस्थापितं कुम्भं च सम्भेद्य वंशयष्टिं भङ्क्त्वा पक्वं कृसरान्नं पत्रपुटोपरि संस्थाप्य प्रथमदिनस्थापितदीपं कृसरान्नं च गृहीत्वा पूर्व्वदिग्भागे (१)पाथेयश्राद्धं कर्तुं गच्छेत् ।

शुद्धायां भूमौ उपविश्याचम्य कर्मपात्रं संस्थाप्य अपसव्येन हस्ते जलादिकं गृहीत्वा अद्येहामुकगोत्रस्यामुकप्रेतस्य (अमुकगोत्राया अमुकप्रेतायाः) भूर्लोकाद्दिव्यलोकं गच्छतो (गच्छन्त्या) मार्गे संजातक्षुदादिनिवृत्त्यर्थं पाथेयश्राद्धं करिष्ये इति प्रतिज्ञाय आसनार्थे कुशान् दत्त्वा अमुकगोत्रामुकप्रेतदमवनेजनंमद्दत्तं तवोपतिष्ठताम् । माषमिश्रं कृसरं गृहीत्वा अमुकगो० इदं पाथेयान्नं मद्दत्तं तवो० । अमुकगो० इदं प्रत्यवनेजनं तवो० । अयं गन्धः । इमेऽक्षताः । इदं भृङ्गराजपत्रमिदमूर्णासूत्रम् इदं तिलोदकं मद्दत्तं तवो० अयं धूपस्तवो० अयं दीपस्तवोपतिष्ठतामिति पूर्व्वदिवसस्थापितं दीपं विसृजेत् । "अनादिनिधनो देव" इति पठित्वा सर्व्वं जले क्षिप्त्वा आचम्य क्रियाकर्त्ता सर्व्वैः सपिण्डैः सह(२)मुण्डनं कृत्वा स्नात्वा

---

(१) भूर्लोकात् प्रेतलोकं तु गन्तुं श्राद्धं समाचरेत् ।
तत्पाथेयंतु भवति मृतस्य मनुजस्य च ॥

इति शातातपस्मृतेः ।

(२) आशौचान्त्यदिने क्षौरं जनन्यांच गुरौ मृते—

इति व्यासस्मृतेः ।

दशमे दिवसे क्षौरं बान्धवानां समुण्डनम् ।
क्रियाकर्त्ता सुतश्चापि पुनर्मुण्डनमाचरेत् ॥

इति गारुडोक्तेश्च । "अनुभाविनां च परिवापनम्"इत्यापस्तम्बोक्तेश्च । परिवापणमिति परित्यज्य शिखां वापनं परिवापणमि-

शुद्धे वाससी धारयित्वा पूर्वधृतवाससी(१)समाश्रितेभ्यो दत्वा सन्ध्यामुपास्य बालपुरस्सरं गृहमागत्य गृहद्वारि स्थित्वा निम्बपत्रं विदश्य गां मङ्गलद्रव्याणि दधिदूर्वादीनि वाग्यतः स्पृष्ट्वा अलाभे मङ्गलद्रव्याणां कीर्तनं कृत्वा विशेषतो जलाग्निस्पर्शनं कृत्वा गृहं प्रविश्य बान्धवैः सह भुञ्जीत ।

विप्रः शुद्ध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् ।
वैश्यः प्रतोदं रश्मीन्वा शूद्रो यष्टिं कृतक्रियः ॥

इतिमनुवचनात् विप्रस्य जलस्पर्शमात्रेण शुद्धिः । दशाहमध्ये दर्शपाते तु मातापितृवर्जं दर्शमध्यएव सर्वं दशाहिकं कृत्यं समापनीयम् ।

अथैकादशाहकृत्यम् ।

आदौ च दम्पती पूज्यौ शय्या देया ततः परम् ।
पश्चाच्च कपिला देया उदकुम्भास्तथैव च ॥
वृषोत्सर्गस्ततः कार्यः पश्चादेकादशाहिकम् । इति ।

दम्पतिपूजनमारभ्य वृषोत्सर्गान्तं कर्म ऋजुदर्भेण देवतीर्थेन प्राङ्मुख उदङ्मुखो वा सव्येन कुर्यात् । यदि मुमूर्षोः दशदा-

---

त्यर्थः । अनुभाविनः प्रेतकनिष्ठा इत्येके । प्रेतदुःखानुभाविनः सर्वे एवेत्यन्ये । पुत्रः, पत्नी, पिण्डदानोचितोऽन्योऽपि इत्येते एवेत्यपरे । जननाशौचेऽपि मुण्डनमिति रत्नमालायाम् । अत्र सर्वत्र समाचाराद्व्यवस्था ।

(१) समाप्य दशमं पिण्डं प्रेतस्पृष्टेतु वाससी ।
अन्त्यानामाश्रितानां च त्यक्त्वा स्नानं करोति च ॥
श्मश्रुलोमनखानां च यत् त्याज्यं तज्जहात्यपि ।
गौरसर्षपकल्केन तिलकल्केन संयुतम् ॥
शिरःस्नानं ततः कृत्वा तोयेनाचम्य वाग्यतः ।
वृषभं गां सुवर्णं च स्पृष्ट्वा शुद्धो भवेन्नरः ॥
इति निर्णयसिन्धौ ।

नादिकं कर्म न जातं तदाऽस्मिन्नवसरे कुर्यात् प्रेतपदोल्लेखेन ।

तिलाद्यष्टमहादानमन्तकाले नचेत् कृतम् ।
शय्यासमीपे धृत्वैतद्दानं तस्य प्रदापयेत् ॥

इति गारुडात् । एकादशाहे प्रातरुत्थाय पुत्रादिः सूर्योदयोत्तरं सचैलं स्नात्वा शुद्धवस्त्रे धारयित्वा नूतनयज्ञोपवीतं धारयित्वा कृतसन्ध्योपासनो दीपं प्रज्वलय्याचम्य शुक्लाम्बरधरमिति विष्णुं प्रार्थ्य कर्मपात्रं संस्थाप्य हस्ते कुशादिकमादाय देशकालौ सङ्कीर्त्यामुकगोत्रस्यामुकप्रेतस्य (अमुकगोत्राया अमुकप्रेतायाः) प्रेतत्वनिवृत्तिपूर्वकाक्षयस्वर्गप्राप्त्यर्थं करिष्यमाणस्य शय्यादानादेः प्रतिग्रहार्थं द्विजदम्पत्योः पूजनमहं करिष्ये । प्रत्यक्षद्विजदम्पत्यभावे स्वर्णप्रतिमायां कौशप्रतिकृतौ (१)वा कार्यम् । द्विजदम्पती 'एतं ते' इति प्रतिष्ठाप्य पाद्यार्घ्यगन्धपुष्पधूपदीपादिभिः द्विजदम्पतिभ्यां नम इतिमन्त्रेण पूजयेत् । ततः कृतैतद्द्विजदम्पतिपूजाप्रतिष्ठासिद्ध्यर्थमिमां दक्षिणां युवाभ्यां सम्प्रददे इति सङ्कल्प्य द्विजदम्पत्योर्हस्ते जलमुत्सृजेत् ।

अथ काञ्चनपुरुषदानम् ।

काञ्चनमयीं प्रेतप्रतिकृतिं "हिमस्य त्वा जरायुणाऽग्ने परिव्ययामसि । पावको अस्मभ्यꣳ शिवो भव"इत्युष्णोदकेन प्रक्षाल्य ॐभूर्भुवः स्वः काञ्चनपुरुषेहागच्छ इह तिष्ठ सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठाप्य काञ्चनपुरुषाय नम इति गन्धादिभिरभ्यर्च्य प्रेतो-

---

(१) निधायाथ दर्भचयमासनेषु समाहितः ।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ॥

इति श्राद्धतत्त्वे वचनात् (१९४),

ब्राह्मणानामसंपत्तौ कृत्वा दर्भमयान् बटून् ।

इति वचनात् "कमण्डलुं दर्भबटुं वा निधाय"

इति तत्रैव गोभिलगृह्याच्च ब्राह्मणाभावे तद्विधानमुपपद्यते ।

पभुक्तशय्याद्युपस्करसहितां फलवस्त्रयुतां प्रतिमां कृत्वा हस्ते जलादिकमादाय देशकालौ सङ्कीर्त्य अमुकगोत्रस्यामुकप्रेतस्य (अमुकगोत्राया अमुकप्रेतायाः) पुराणोक्तफलप्राप्त्यर्थमिमां पूर्वोपभुक्तशय्याद्युपस्करयुतां फलवस्त्रसहितां काञ्चनमयीं प्रेतप्रतिकृतिं युवाभ्यां सम्प्रददे इत्युच्चार्य द्विजदम्पत्योर्हस्ते जलमुत्सृजेत् ! दानप्रतिष्ठासिद्ध्यर्थं सुवर्णं निष्क्रयद्रव्यं वा संकल्प्य दद्यात् ।

(१)अथ शय्यादानम् ।

यथोपकरणवतीं शय्यां दक्षिणोत्तरायतां परिस्तीर्य शिरःप्रदेशे घृतकुम्भं निधाय पादप्रदेशे ज्वलन्तं चतुर्वर्तियुतं दीपं दीपाधान्यां संस्थाप्य अधः प्रदेशे कर्पूरादिवासितं जलकलशं संस्थाप्यान्यानि चोपकरणानि पार्श्वयोः संस्थाप्य शय्योपरि सप्तधान्यानि निक्षिप्य हिमस्यत्वेति उष्णोदकेन क्षालितां पञ्चामृतेन स्नापितां सौवर्णीं लक्ष्मीनारायणप्रतिमाम् 'एतन्ते' इति प्रतिष्ठाप्य शय्यायां संस्थाप्य गणेशादिपुष्पाञ्जलिपूर्वकं ध्यात्वा पाद्याद्युपचारैः पुरुषसूक्तेन नाममन्त्रेण

---

(१)आशौचान्तर्द्वितीयेऽह्नि शय्यां दद्यात्सुलक्षणाम् ।
काञ्चनं पुरुषं तद्वत् फलपुष्पसमन्वितम् ॥
संपूज्य द्विजदाम्पत्यं नानाभरणभूषणैः ।
वृषोत्सर्गश्च कर्तव्यो देया च कपिला शुभा ॥

इति मत्स्यपुराणे शुद्धितत्त्वे (३३८) उक्तेः दम्पतिपूजनादिकं क्रमेण कार्यम् । द्विजदांपत्यं संपूज्य शय्यां दद्यादित्यन्वयः । कपिलादानमुत्तरत्र निर्दिष्टमपि वृषोत्सर्गात् पूर्वं कार्यम् । दानसाजात्यात् ।

न गृहे मोचयेन्नीलं कामयन् पुष्कलं फलम् ।
इति नि०कालिकापुराणेन गृहे वृषोत्सर्गनिषेधात्,
एवं कृत्वा वृषोत्सर्गं कुर्याच्छ्राद्धानि षोडश ।

इति (१२अ०) गारुडे वृषोत्सर्गानन्तरं षोडशश्राद्धानां विधानाच्च उदकुम्भदानं कपिलादानानन्तरं कार्यम् । अनन्तरं वृषोत्सर्ग इति कारिकोक्तः क्रमः सिध्यतीति बोध्यम् ।

च लक्ष्मीनारायणप्रतिमां सम्पूज्य शय्यां च नाममन्त्रेण गन्धाद्युपचारैः सम्पूज्य 'ॐ नमः प्रमाण्यै देव्यै' इत्युच्चरन् चतुर्दिशं शय्यां प्रणम्य प्रदक्षिणीकृत्य च हस्ते कुशादिकमादाय देशकालौ सङ्कीर्त्य अमुकगोत्रस्यामुकप्रेतस्य (अमुकगोत्राया अमुकप्रेतायाः) सकलनरकयातना—घर्मशीतादिबाधा—याम्यपुरुषप्रहारनिवृत्तिपूर्वकानेककल्पान्तपुरन्दरादिसकललोकप्राप्त्यर्थं घृतकुम्भ—जलकलश—ताम्बूलकुङ्कुमागरुकर्पूरचन्दनदीपिकापादुकोपानच्छत्रचामरासननानाविधभाजनसुवर्णरजतभूषणविविधभक्ष्यभोज्यादर्श (कङ्कतकाचमणिसूत्रकाचकङ्कणनासिकाभूषणसिन्दूरादिसौभाग्यद्रव्य) यथासम्भवपट्टकौशेयक्षौमौर्णकार्पासवस्त्र (वाहनायुध)हैमलक्ष्मीनारायणप्रतिमायुतामिमां (यथाशक्त्युपकरणवतीं वा) शय्यां प्रजापतिदैवतां युवाभ्यां सम्प्रददे ॐ तत्सन्न मम इति सङ्कल्प्य—

यथा न कृष्णशयनं शून्यं सागरजातया ।
शय्या (प्रेताया अशून्या) प्रेतस्याशून्यास्तु तथा जन्मनिजन्मनि॥
यस्मादशून्यं शयनं केशवस्य शिवस्य च ।
शय्या (प्रेताया अशून्या) प्रेतस्याशून्यास्तु तस्माज्जन्मनिजन्मनि॥

इति मन्त्राभ्यां द्विजदम्पतिहस्ते दद्यात् । मुहूर्तं शय्यायां द्विजदम्पती विश्रामयेत् । कृतस्यास्य शय्यादानस्य प्रतिष्ठासिद्धये इदं सुवर्णं निष्क्रयद्रव्यं वा युवाभ्यां सम्प्रददे इति दत्त्वा प्रणिपत्य क्षमापयेत् । यस्य स्मृत्येति पठेत् ।

## अथ कपिलादानम् ।

कपिलां गां निष्क्रयद्रव्यं वा पुरतोऽवस्थाप्य हस्ते कुशादिकमादाय देशकालौ सङ्कीर्त्य अमुकगोत्रस्यामुकप्रेतस्य(अमुकगोत्राया अमुकप्रेतायाः) प्रेतत्वनिवृत्तिपूर्वकोत्तमलोकप्राप्त्यर्थं

कपिलादानमहं करिष्ये तदङ्गत्वेन गवादिपूजनं च करिष्ये इति सङ्कल्प्य—

कपिले सर्वदेवानां पूजनीयासि रोहिणी।
तीर्थं धेनुमयी यस्मादतः शान्तिं प्रयच्छ मे॥

इति गां सम्पूज्य साक्षाद्गोरभावे अमुकद्रव्याय नम इति सम्पूज्य हस्ते जलादिकमादाय देशकालौ सङ्कीर्त्य अमुकगोत्रस्यामुकप्रेतस्य (अमुकगोत्राया अमुकप्रेतायाः) प्रेतत्वविमुक्तिपूर्वकोत्तमलोकप्राप्त्यर्थमिमां यथाशक्त्यलङ्कृतां पूजितां कपिलां ( निष्क्रयद्रव्यं वाऽमुकदैवतं) रुद्रदैवताममुकगोत्रायामुकशर्मणे ब्राह्मणाय दातुमहमुत्सृजे ॐतत्सन्न मम इति सङ्कल्प्य यज्ञसाधनभूतेत्यादि पठित्वा दद्यात्। ततो दानप्रतिष्ठां कृत्वा यस्य स्मृत्येति पठेत्।

## अथोदकुम्भदानम्।

(१)संवत्सरदिनपरिमितान्मध्येऽधिमासपाते त्रिंशदधिकान्

---

( १ ) यद्यपि-एकादशाहात् प्रभृति घटस्तोयान्नसंयुतः।
दिने दिने प्रदातव्यो यावत् सँवत्सरं सुतैः॥

इति हेमाद्रौ स्मृतिसमुच्चये वचनात् एकादशाहमारभ्य मृततिथिं यावत् सँवत्सरदिनसंख्यागणनायां पञ्चाशदधिकशतत्रय संख्यैव सम्पद्यते, चान्द्रमानेन एकस्मिन् सावनेऽब्दे पञ्चषाणां दिनानां ह्रासावश्यंभावात् ततोऽपि पञ्चषाणि दिनानि न्यूनान्येव भवन्ति, षष्ट्यधिकशतत्रयसंख्या तु न कदाचित् सम्भवति इति सपिण्डनापकर्षे—

अन्नञ्चैव स्वशक्त्या तु संख्याकृत्वा ऽऽब्दिकावधि।
दातव्यं ब्राह्मणे स्कन्द घटादौ निष्क्रयं तु वा॥
तेनापकृष्य दातव्यं प्रेतस्याप्युदकुम्भकम्।

इति गोभिलभाष्यस्थस्कान्दवचनानुसारेण युगपद्दीयमानोदकुम्भानां षष्ट्यधिकशतत्रयसंख्या न कथमपि उपपद्यते तथाऽपि

सान्नान्सदीपान्सदन्तधावनान् उदकपूर्णकुम्भान् क्वचिच्छुभदेशे निधाय गन्धवस्त्रादिपूजितान् कृत्वा प्राङ्मुखो ब्राह्मणलाभे ब्राह्मणं सम्पूज्य तदलाभे मनसोद्दिश्य हस्ते जलादिकं गृहीत्वा देशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रेतस्य ( अमुकगोत्राया अमुकप्रेतायाः ) मरणदिनमारभ्य तिथिवृद्धचान्द्रमानेन संवत्सरपूर्तिपर्यन्तं जायमानप्रायस्हिकक्षुत्पिपासानिवृत्त्यर्थं षष्ट्यधिकत्रिशतसङ्ख्याकान् ( अधिमासपाते तु नवत्यधिकत्रिशतसङ्ख्याकान् ) सान्नान् सदीपान् सदन्तधावनान् उदकु-

---

मृते पितरि वै पुत्रः पिण्डमब्दं समाचरेत् ।
अन्नं कुम्भं च विप्राय प्रेतनिर्देशधर्मतः ॥

इति हारीतवचने अब्दमिति उपादानात् अब्दपूर्तेश्च मृतिदिनमारभ्य मृतिदिनपर्यन्तं गणनायामेव सम्भवात् चान्द्रमाने पञ्चषाणां दिनानां ह्रासेऽपि तिथीनां षष्ट्यधिकशतत्रयसंख्याकानां सम्भवात् युगपत् करिष्यमाणदाने सूक्ष्मदृष्ट्या संख्याऽनाकलनात् अधिकद्रव्यस्य दानेऽपि दोषासम्भवात् क्रियातिरेके एव अवैधत्वस्मरणात् समाचाराच्च षष्ट्यधिकशतत्रयसंख्याकानामेव उदकुम्भानां दानमनुष्ठीयते । केचित्तु हारीतवचनादेव मृतिदिनमारभ्य सान्नोदकुम्भदानमनुतिष्ठन्ति । तन्न युक्तम् ।

एकादशाहात् प्रभृति घटस्तोयान्नसंयुतः ।

इति हेमाद्रिवचोविरोधात् । आशौचेन तत्रानधिकाराच्च । अत एव—

यस्य सँवत्सरादर्वाक् सपिण्डीकरणं भवेत् ।
मासिकं चोदकुम्भं च देयं तस्याऽपि वत्सरम् ॥

इति सपिण्डनानन्तरं पुनरनुष्ठीयमानसान्नोदकुम्भदाने मध्ये आशौचप्राप्तौ लोप एव दर्शवत् इति निर्णयसिन्धौ उक्तम् ।

उदकुम्भैः सह दीपा अपि देयाः ।
प्रत्यहं दीपको देयो मार्गे तु विषमे नरैः ।
यावत्संवत्सरं वापि प्रेतस्य सुखलिप्सया ॥
इति देवजानीये गारुडादिति ।

म्भान् पूर्वोक्तविशेषणविशिष्टानि पर्णपुटानि वा ब्राह्मणाय दास्ये ॐतत्सन्न मम इति सङ्कल्प्य कृतस्य सान्नोदकुम्भदानस्य प्रतिष्ठासिद्ध्यर्थमिमां दक्षिणां ब्राह्मणायदास्ये इति दानप्रतिष्ठां कुर्यात् ।

अथ वृषोत्सर्गः ।

स च नित्यः ।

न करोति वृषोत्सर्गं सुतीर्थे वा जलाञ्जलीन् ।
न ददाति सुतो यस्तु पितुरुच्चार एव सः ॥

इति कौर्मोक्तेः ।

एकादशेऽह्नि प्रेतस्य यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

इति निन्दाश्रुतेश्च । काम्यश्च ।

एवं कृत्वा ह्यवाप्नोति फलं वाजिमखोदितम् ।
यमुद्दिश्योत्सृजेन्नीलं स लभेत पराङ्गतिम् ॥

इति भविष्यादौ फलश्रुतेः ।

यद्यपि पारस्करगृह्ये "यूथे मुख्याश्चतस्रो वत्सतर्यस्ताश्चालङ्कृत्य" इति श्रवणात् चतसृभिः वत्सतरीभिः सह वृषस्य उत्सर्जनं प्राप्नोति तथाऽपि—

चतस्रो वत्सिका भद्रा द्वे वा सम्भवतोऽपि वा ।

इति देवीपुराणोक्तेः,

वत्सं वत्सीं समानाय्य बध्नीयात् कङ्कणं तयोः ।

इति गारुडोक्तेश्च द्वाभ्याम् एकयाऽपि वा वत्सतर्या सह वृषस्योत्सर्गः शास्त्रसिद्ध एवेति तदनुसारेणैव प्रयोगः प्रदर्श्यते ।

अत्र च नान्दीश्राद्धं निषिद्धम् ।

वत्सराभ्यन्तरे पित्रोर्वृषस्योत्सर्गकर्मणि ।

वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समाचरेत् ॥

इति कामधेनूक्तेः। अतएव न मातृपूजनम्। अयं च पतिपुत्रोभयवत्याः स्त्रियाः भर्तुः सन्निधाने मरणे न कार्यः।

पतिपुत्रवती नारी भर्तुरग्रे मृता यदि।
वृषोत्सर्गं न कुर्वीत गां च दद्यात् पयस्विनीम् ॥

इति संग्रहोक्तेः। तयोरग्रे इति गारुडे पाठः।

अथ वृषोत्सर्गप्रयोगः।

तत्रादौ प्रेतपुत्रादिः गङ्गातीरादिकं गत्वा सुस्नात आचान्तो भूमिशुद्धिं संपाद्य तत्र सर्वां वृषोत्सर्गसामग्रीं संस्थाप्य कर्मपात्रं संपाद्य तेन जलेन सामग्रीं संप्रोक्ष्य प्राणानायम्य पुण्डरीकाक्षादिस्मरणं कृत्वा हस्ते जलादिकमादाय देशकालौ सङ्कीर्त्य अमुकगोत्रस्यामुकप्रेतस्य ( अमुकगोत्राया अमुकप्रेतायाः) प्रेतत्वविमुक्तिपूर्वकोत्तमलोकप्राप्त्यर्थं वृषोत्सर्गमहं करिष्ये इति प्रतिज्ञाय तत्पूर्वाङ्गत्वेनाचार्यब्रह्मणोर्वरणमहं करिष्ये इति संकल्प्य अद्य कर्तव्ये वृषोत्सर्गकर्मणि आचार्यत्वेन भवान्मया निमन्त्रितः। निमन्त्रितोऽस्मीति प्रतिवचनम्। अद्य कर्तव्ये० कृताकृतावेक्षकत्वेन भवान्मया०। इति कुशब्राह्मणौ आचार्यब्रह्मत्वेन वृणुयात्। ततो हस्तपरिमितं स्थण्डिलं विधाय परिसमूहनादि कुर्यात्। त्रिभिर्दर्भैः परिसमूहनम्। पांसूनामपसारणम्। गोमयेनोपलेपनम्। स्रुवेण प्रागग्रा उदक्संस्थास्तिस्रो रेखाः स्थण्डिलप्रमाणेन कृत्वा अनामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो रेखाभ्यः पांसूनुद्धृत्यैशानकोणे प्रक्षिपेत्। उदकेनाभ्युक्ष्य ताम्रपात्रेणाग्निं गृहीत्वा--

अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे।

देवाँ आसादयादिह ।

इत्युच्चार्य वेद्यां स्वाभिमुखं स्थापयेत् । आचार्यायासनं दत्त्वा अग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्य तत्र पूर्ववृतं ब्रह्माणमुपवेश्याग्नेरुत्तरत आसनद्वयं कल्पयित्वा प्रणीतापात्रं सव्यहस्ते कृत्वा तन्मध्ये पिष्टादिना सेतुं विधाय मूलप्रदेशे पयः इतरत्र जलं प्रणीय दर्भैराच्छाद्य ब्रह्ममुखमवलोक्य पश्चिमासने निधायालभ्य द्वितीयासने प्रणीतापात्रं निदध्यात् ।

प्रागग्रैरुदगग्रैश्च कुशैः पूर्वादिक्रमेण परिस्तरणम् । तत्र प्राक् प्रत्यक्चोदगग्रैर्दक्षिणत उत्तरतश्च प्रागग्रैः । अर्थवदासादनम् । पवित्रच्छेदनानि त्रीणि कुशतरुणानि, द्वे पवित्रे साग्रे, प्रोक्षणीपात्रम्, आज्यस्थाली, चरुस्थाली, सम्मार्जनकुशाः पञ्च, उपयमनकुशास्त्रयः, समिधस्तिस्रः, स्रुवः खादिरः, गव्यमाज्यम्, तण्डुलाः, पूर्णपात्रम्, सिद्धः पिष्टमयश्चरुः । एतान्यासाद्य पवित्रे कृत्वा प्रोक्षणीपात्रं प्रणीतात उत्तरतो निधाय तत्र प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय तत्पात्रं दक्षिणेनाङ्गाय सव्ये कृत्वा तदुदकं दक्षिणेनोच्छाल्य पवित्राभ्यां प्रणीतोदकेन तज्जलं प्रोक्ष्यार्थवन्ति आज्यस्थाल्यादीनि पवित्राभ्यां प्रोक्षणीजलेन प्रोक्षेत् । आज्यस्थाल्यामाज्यं निरूप्य चरुस्थाल्यां तण्डुलनिर्वापं कृत्वा तत्र प्रणीतास्थक्षीरमासिच्य आज्यचर्वोर्युगपदग्नावारोपणम् । अर्धश्रृते चरावाज्ये च ज्वलदुल्मुकं समन्ताद्भ्रमयेत् । स्रुवप्रतपनम् । सम्मार्जनकुशाग्रैर्मूलतः अग्रपर्यन्तमुपरिष्टात्सम्मार्ज्य सम्मार्जनकुशमूलैरधस्तादग्रतो मूलपर्यन्तं सम्मार्ज्य प्रणीतोदकेन प्रोक्ष्य पुनः प्रतप्य कराभ्यां सम्मार्ज्य दक्षिणतो निदध्यात् । आज्यमुत्तरत उद्वास्य पश्चादानीय एवं पायसचरुमप्युत्तरत उद्वास्य पश्चिमत आनीयाज्यस्योत्तरतो निदध्यात् । ततः सिद्धं पौष्णं

पिष्टचरुं तदुत्तरतो निदध्यात् । आज्यमुत्पूयावेक्ष्यापद्रव्यनिरसनं कृत्वा प्रोक्षणीश्चोत्पूयोपयमनकुशानादाय वामहस्ते धृत्वा समिध आज्येनाक्त्वा समिधाग्निमिति तिष्ठन् प्रक्षिपेत्। प्रोक्षण्युदकेनाग्नेः प्रदक्षिणमीशानाद्युत्तरपर्यन्तं पर्युक्षणं कृत्वा पवित्रे प्रणीतापात्रे निदध्यात् । संस्रवधारणार्थं प्रोक्षणीपात्रं प्रणीताग्न्योर्मध्ये निदध्यात् ।

(१)साहसनामानमग्निम् 'एतं ते'इति प्रतिष्ठाप्य सम्पूज्य द्रव्यदेवताभिध्यानं कुर्यात् । अद्येहामुकगोत्रस्यामुकप्रेतस्याक्षयस्वर्गप्राप्तये वृषोत्सर्गहोमकर्मणा यक्ष्ये । तत्राग्निं प्रजापतिमिन्द्रमग्निं सोमं चाज्येन, अग्निं रुद्रं शर्वं पशुपतिम् उग्रम् अशनिं भवं महादेवम् ईशानं च पायसचरुणा, पूषाणं पिष्टचरुणा, अग्निं स्विष्टकृतं पायसपिष्टचरुभ्याम्, अग्निं, वायुं, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान्, वरुणं, प्रजापतिं चाज्येनाहं यक्ष्ये । ( इदमाज्यादिद्रव्यमग्नये आघाराज्यभागदेवताभ्यः अग्नये रुद्राय शर्वाय पशुपतये उग्राय अशनये भवाय महादेवाय ईशानाय पूष्णे अग्नये स्विष्टकृते महाव्याहृतिदेवताभ्यः सर्वप्रायश्चित्तदेवताभ्यः प्रजापतये च मया परित्यक्तमोंतत्सद्यथादैवतमस्तु न मम )। दक्षिणं जान्वाच्य स्रुवेण जुहुयात् ।

---

( १ ) प्रायश्चित्ते विधिश्चैव पाकयज्ञे तु साहसः ।

इति शुद्धितत्त्वे गृह्यासंग्रहवचनात् साहसनामाऽग्निः। वृषोत्सर्गहोमस्य पाकसाध्यत्वात् पाकयज्ञत्वम् ।

ॐ(१)इह रतिः स्वाहा (२)इदमग्नये१ । ॐइह रमध्वं-स्वाहा इदमग्नयं२ । ॐइह धृतिः-स्वाहा इदमग्नये३ । ॐइह स्वधृतिः स्वाहा इदमग्नये४ । ॐउपसृजन्धरुणं मात्रे धरुणो मातरन्धयन्-स्वाहा इदमग्नये५ । ॐरायस्पोषम-स्मासु दीधरत्स्वाहा इदमग्नये६ ।

इति षडाहुतीर्हुत्वा ब्रह्मणाऽन्वारब्धो मनसा प्रजापतिं ध्यात्वा ॐप्रजापतये स्वाहा इदं प्रजापतये । ॐइन्द्राय स्वाहा इदमिन्द्राय । ॐअग्नये स्वाहा इदमग्नये । ॐसोमायस्वाहा इदꣳ सोमाय । इत्याज्येन हुत्वा--

पायसचरुणा जुहुयात् । (३)ॐअग्नये स्वाहा इदमग्नये१ । ॐरुद्राय स्वाहा इदꣳ रुद्राय२ । ॐशर्वाय स्वाहा इदꣳ शर्वाय३ । ॐपशुपतये स्वाहा इदं पशुपतये४ । ॐउग्राय स्वाहा इदमुग्राय५ । ॐअशनये स्वाहा इदमशनये६ । ॐभवाय स्वाहा इदं भवाय७ ।

---

(१) (य०सं०८।५१)"इहरति"इत्यादिका स्वाहान्ता कण्डिका । "इह रतिरिति षड् जुहोति प्रतिमन्त्रम्"(कां०३। कं०९) इति पारस्करगृह्ये षडाहुतिविधानात् षड् भागाः क्रियन्ते । "आज्यं संस्कृत्ये-हरतिरिति षड् जुहोति" इति आज्यसंस्कारानन्तरं विधानात् आघाराज्यभागहोमात्पूर्वमयं होमः कर्कादिसंमतः ।

(२) 'इदमग्नये इति षट्सु त्यागा' इति हरिहरेणोक्तत्वात् तद-नुसारेण अत्र त्यागाः प्रदर्शिताः । गदाधरेण तु "इहरतिरिति पशु-दैवतम् उपसृजन्नित्युष्णिगाग्नेयी" इतिसर्वानुक्रमसूत्रे उक्तत्वात् 'चतसृषु इदं पशुभ्य इति त्यागाः । द्वयोः इदमग्नये इति त्यागौ' इत्युक्तम् ।

(३) "अथ वृषोत्सर्गो गोयज्ञेन व्याख्यात" इति वृषोत्सर्गक-ण्डिकायामुक्तेः "एतेनैव गोयज्ञो व्याख्यातः" इति (पा० गृ० ३।८) कण्डिकायामुक्तेः तत्र च अग्न्यादीशानान्तदेवताभ्यो नवभ्यो हो-मविधानात् अत्रापि तदतिदेशेन पायसचरुणा नवाहुतिहोमो लभ्यते ।

ॐमहादेवाय स्वाहा इदं महादेवाय८। ॐईशानाय स्वाहा इदमीशानाय९। इति नवाहुतीर्हुत्वा--

पिष्टचरुणा जुहुयात्(१)।

ॐ पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः।

पूषा वाजꣳ सनोतु नः स्वाहा–इदं पूष्णे।

ततः पायसपौष्णचरुभ्याम् ॐअग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते इति स्विष्टकृद्धोमं कृत्वा भूराद्या नवाहुतीराज्येन जुहुयात्। ॐभूः स्वाहा इदमग्नये। ॐभुवः स्वाहा इदं वायवे। ॐस्वः स्वाहा इदꣳ सूर्याय।

ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः।

यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्–स्वाहा इदमग्नीवरुणाभ्याम्।

ॐ स त्वं नो अग्ने ऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि–स्वाहा इदमग्नीवरुणाभ्याम्।

ॐ अयाश्चाग्ने ऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया असि।

अया नो यज्ञं वहास्यया नो धेहि भेषजꣳ स्वाहा इदमग्नये। ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्योदेवेभ्यो मरुद्भ्यः स्वर्केभ्यः।

---

(१) "तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति" इति श्रुतेः पिष्टमयचरुणा पूष्णे होमः। संख्याऽनुपदेशात् एकैवाहुतिः। मन्त्रश्चायं "पूषा गा" इति सौत्रः ( ऋ० सं० ४।८।१९ )।

ॐउदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम-स्वाहा इदं वरुणाय। ॐप्रजापतये स्वाहा इदं प्रजापतये। इति नवाहुतीर्हुत्वा संस्रवप्राशनं, पवित्राभ्यां मुखमार्जनमग्नौ पवित्रप्रतिपत्तिं, प्रणीताविमोकं ब्रह्मणे पूर्णपात्रदानं च कुर्यात्। होतृब्रह्मभ्यां सुवर्णं वस्त्रयुगं च दक्षिणां दद्यात्। ततो "नमस्ते रुद्रमन्यव" इत्यारभ्य "जम्भे दध्मः" इत्यन्तं (१)रुद्राध्यायं जपित्वा चतसृभिर्वत्सतरीभिः द्वाभ्यामेकया वा सहितं वृषभमादायाग्नेरुत्तरतो निधाय "मानस्तोक" इति वृषस्य दक्षिणपार्श्वे रक्तचन्दनेन त्रिशूलं विलिख्य, वामपार्श्वे--

वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे।
पवमानः स्वर्दृशः॥

इति मन्त्रेण (ऋ०सं०७।२।१) चक्रं लिखित्वा लोहकारेण तप्तशूलचक्राङ्कलोहेनाङ्कं कारयेत्(२)। ततो "हिरण्यवर्णा" इति

---

(१) अत्र "रुद्रान् जपित्वा" इत्येतावन्मात्रस्यैव गृह्ये उपदेशात् तावन्मात्रमेव हरिहरेणोक्तम्। गदाधरेणतु नवकण्डिकाभाष्ये अस्मिन्नेवावसरे "अश्वत्थपत्रयुक्तकलशे रुद्रमावाह्य गन्धादिभिः सम्पूज्य हस्तेन कलशं स्पृशन् रुद्राध्यायं जपेत्" इति विशेष उक्तः।

स्नापयेच्च वृषं वत्सीं रुद्रकुम्भोदकेन च।
गन्धमाल्यैश्च सम्पूज्य कारयेच्च प्रदक्षिणाः॥ (कुर्यात्)
इति गारुडोक्तेः।

(२) शुद्धितत्त्वे छन्दोगपरिशिष्टे (३७८)—

ततोऽरुणेन गन्धेन मानस्तोकइतीरयन्।
वृषस्य दक्षिणे पार्श्वे त्रिशूलाङ्कं समुल्लिखेत्॥
वृषाह्यसीति सव्येऽस्य चक्राङ्कमपि दर्शयेत्।
तप्तेन पश्चादयसा स्पष्टौ तावेव कारयेत्॥ इति। अङ्कनं तु स्फिचोः कार्यम्। स्फिचोरङ्कनमिमि बह्वृचपद्धतौ लेखनात्।
(छन्दोगपरिशिष्टवाक्ये पश्चाद्भागार्थकस्य पश्चात्पदस्य प्रयोगाच्च) इति।

चतसृभिः शन्नोदेवीरिति च वत्सतरीः वृषं च स्नापयेत्।

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्निं या गर्भं दधिरे विरूपास्ता न आपः शꣳ स्योना भवन्तु॥ १॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्॥ मधुश्चुतः शुचयो याः पावकास्ता न आपः शꣳ स्योना भवन्तु॥ २॥ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति। याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शꣳ स्योना भवन्तु॥३॥ शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे। सर्वाꣳ अग्नीꣳ रप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त॥४॥ (तै०सं०५।६।१) इति॥

शं नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः॥ इति।(१)

ततो घण्टिकानूपुरकटकादिभिः पञ्च त्रीन् द्वौ वा अलङ्कृत्य–

कामधेनोः कुले जातास्त्रिहायण्यः सुधावहाः।
नरकादुद्धरन्त्वेनं स्वर्गलोके मयाऽर्चिताः॥

इत्यनेन वत्सतरीर्गन्धादिना सम्पूज्य–

(तीक्ष्णशृङ्गायै विद्महे वेदपादायै धीमहि।

---

(१) अत्र वत्सतरीणां स्नापने श्रीसूक्तस्य विनियोगः पद्धतिकाराणां भ्रान्तिमूलकः। "हिरण्यवर्णा" इति चतसृभिः" इत्यादौ अब्दैवताकस्य सूक्तस्यैव स्नापने विनियोगोपलब्धेः। अनन्वितार्थत्वाच्च। एवं "रुद्रान् जपित्वा" इति जपमात्रस्यैवोपदेशात् वृषस्नापने तस्य विनियोगोऽपि तथैव। अतएव हरिहरगदाधरादिपद्धतिषु तथा विनियोगो नोपलभ्यते इति बोध्यम्।

तन्नो गौरी प्रचोदयात् ।

इति दक्षिणकर्णे (१)जपेत् ।)

ततो मधुपर्कविधिना—"धर्मस्त्वं वृषरूपेण जगदानन्दकारक ।
अष्टमूर्तेरधिष्ठानमतः 'शान्ति प्रयच्छ मे' (पाहि सनातन) ॥

इत्यनेनैव वा वृषभं सम्पूज्य–

(२)(तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि ।
तन्नो वृषः प्रचोदयात् ॥) इति,
वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः ।
वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः ॥

इति च वृषस्य दक्षिणकर्णे जपेत् । ततो गृहीतपुष्पाञ्जलिर्वृषं त्रिः परिक्रम्य नमस्कुर्यात् । (गारुडात्)

(३)ततो वृषाय वत्सतरीदानपूर्वको वृषवत्सतरीणां वस्त्रेण संश्लेषः—

अयं हि वो मया दत्तः सर्वासां पतिरुत्तमः ।
तुभ्यं चैता मया दत्ताः पत्न्यः सर्वा मनोरमाः ॥

इति मन्त्रेण । ततो वृषवत्सतरीभिश्चतस्रोऽग्निप्रदक्षिणाः कारयित्वा वृषपुच्छे पुरुषसूक्तेन प्रेतनाम्ना च तर्पणं कुर्यात् । ततो देशकालौ सङ्कीर्त्य अमुकगोत्रस्यामुकप्रेतस्य (गोत्रायाः प्रेतायाः) प्रेतत्वविमुक्तिपूर्वकाक्षयस्वर्गलोकप्राप्तये इमं वृषं यथाशक्त्यलङ्कृतं

---

(१) वत्सतरीकर्णे जपप्रकारो हरिहरादिपद्धतिषु नोपलभ्यते । अतोऽत्र दृढं मूलं चिन्त्यम् ।

(२) यद्यपि अस्य मन्त्रस्य वृषकर्णे जपो हरिहरादिपद्धतिषु नोपलभ्यते, तथापि मिताक्षराटीकायाम् (५८५) उपलभ्यत एवेति बोध्यम् ।

(३) वत्सं वत्सीं समानाय्य बध्नीयात् कङ्कणं तयोः ।
वैवाह्येन विधानेन स्तम्भमारोपयेत्तदा ॥
इति गारुडोक्तेः सर्वमेतद् वक्ष्यमाणं लभ्यते ।

गन्धाद्यर्चितमेवंविधवत्सतरीसहितं रुद्रदैवतमहमुत्सृजामि इति संकल्प्य करसम्पुटं कृत्वा प्राङ्मुखो भूत्वा—

एतं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण।

मा नः साप्तजनुषा ऽसुभगा रायस्पोषेण समिषा मदेम॥

इति पठित्वा सव्येन पाणिना वृषपुच्छं गृहीत्वा दक्षिणेन कुश-तिलजलमादाय अमुकगोत्रायामुकप्रेताय ( गोत्रायाः प्रेतायाः ) 'वृष मया दत्तस्तन्तारयतु सर्वदा'—

इत्युच्चार्य जलादिकं भूमौ प्रक्षिपेत्।

ततो वत्सतरीमध्यगतमुत्सृष्टं वृषं (१) "मयो भूः" इत्यादिना "स्वर्ण सूर्यः स्वाहा" इत्यन्तेनानुवाकशेषेणाभिमन्त्रयते। (य० सं० १८।४५-५०) मयोभूराभि मा वाहि स्वाहा मारुतो

---

(१) मयोभूर्वातो अभिवातूस्रा ऊर्जस्वतीरोषधीरारिशन्ताम्।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड॥
याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद।
या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्यमहिशर्म यच्छ॥
या देवेषु तन्वमैरयन्त यासां सोमो विश्वा रूपाणि वेद।
ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र गोष्ठे रिरीहि॥
प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संविदानः।
शिवाः सतीरुप नो गोष्ठमाकस्तासां वयं प्रजया संसदेम॥
( ऋ०सं०अ०८-८-२७ )

इति ऋक्संहितायां गोदेवताकं सुक्तं दृश्यते। युज्यते च तेनाभिमन्त्रणम्। उक्तं च बौधायनेन तेनैव, तथापि पा०गृ०कां०३।९ कण्डिकायां 'नभ्यस्थमभिमन्त्रयते "मयोभूरित्यनुवाकशेषेण" इत्युक्तेः सर्वैरेव भाष्यकारैः पद्धतिकारैश्च "मयोभूरभिमावाहि स्वाहा" इत्यादिना "स्वर्ण सूर्यः स्वाहा" इत्यन्तेन अनुवाकशेषेणाभिमन्त्रयते' इति तद्व्याख्यानाच्च ( १८।४५—५० ) यजुःसंहितास्थानुवाकशेषेणैवाभिमन्त्रणं निर्दिष्टम् इति बोध्यम्।

ऽसि मरुतां गणः। शम्भूर्मयोभूरभि मा वाहि स्वाहाऽवस्यूरसि दुवस्वाञ्छम्भूर्मयोभूरभि मा वाहि स्वाहा॥ यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः। ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि ॥ या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः। इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते॥ रुचं नो धेहि ब्राह्मणेषु रुचꣳ राजसु नस्कृधि। रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः ॥ स्वर्ण घर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्ण शुक्रः स्वाहा स्वर्ण ज्योतिः स्वाहा स्वर्ण सूर्यः स्वाहा--

इत्यनामिकया स्पृशन्नभिमन्त्र्य वृषवत्सतरीपुच्छान् गृहीत्वा दक्षिणाभिमुखो भूत्वा तिलकुशजलान्यादाय पितृतीर्थेन तिलाक्षतयुतं जलं वक्ष्यमाणमन्त्रैः पित्रादिभ्यो दद्यात्।

स्वधा पितृभ्यो मातृभ्यः पशुभ्यश्चापि तृप्तये।
मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षकाः॥
गुरुश्वशुरबन्धूनां ये चान्ये कुलसम्भवाः।
ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः॥
वृषोत्सर्गेण ते सर्वे लभन्तां तृप्तिमुत्तमामिति।

ततो वत्सतरीयुतं वृषमैशान्यां प्रणोदयेत्। ततो लोहकाराय वरं दद्यात्। यथाशक्ति ब्राह्मणान् पायसेन भोजयेत्। तत आचार्याय गां दद्यात्। भूयसीं च ब्राह्मणेभ्यो दत्त्वा यस्य स्मृत्येति पठेत्।

निरीक्षितृके (अस्वामिके) औपादानिकस्वत्वसत्त्वेऽपि

उत्सृष्टानां वृषवत्सतरीणां--

नैवाज्यं न च तत्क्षीरं पातव्यं केनचित् क्वचित्।
न वाह्योऽसौ वृषश्चैषामृते गोमूत्रगोमये॥

इत्यनेन यथेष्टविनियोगनिषेधात् न गोमूत्रगोमयवर्जं तेषां किञ्चिदपि उपादेयम्। सङ्कल्पविरोधाच्च। "अनेन प्रियेण वनेषु क्रीडन्त्यः अनवच्छिन्नकालं चरत" इति हि उत्स्रष्टुः सङ्कल्पो न तु परेऽप्येतं गोबलीवर्दरूपं भुञ्जतामिति। उत्सृष्ट-कूपादौ तु 'सर्वभूतानि स्नानपानावगाहनादि यथेष्टमिह कुर्वन्तु' इति सङ्कल्पेन तत्र औपादानिकस्वत्वेन पानावगाहनादि सर्वं भवति इति बोध्यम् इति हरिहरभाष्ये विस्तरः। वृषोत्सर्गश्च वृषवत्सतरीणां यथेष्टसञ्चारयोग्यस्थलं पर्यालोच्यैव कार्यः। यो-ग्यस्थलासत्त्वे नगरग्रामादौ तत्कर्तृकोपद्रवे नागरिकादिभिस्तन्नि-ग्रहे नानाविधदोषगणापातादिति सुधियो विचारयन्तु।

इति वृषोत्सर्गविधिः॥

## अथैकादशाहश्राद्धविधिः।

(१)तत्राद्यश्राद्धम्। तच्च महैकोद्दिष्टात्मकं प्रथममासिकात्मकं

---

(१) सद्यःशौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि।
स एव दिवसस्तस्य श्राद्धशय्याशनादिषु॥
इति निर्णयसिन्ध्वादौ पैठीनसिवचनात्,
त्र्यहाशौचेऽपि कर्तव्यमाद्यमेकादशेऽहनि।

इति तत्रैव उशनोवचनाच्च आद्यश्राद्धं सद्यःशौचे एकाहाशौचे-च एकादशे एव। एतेन "आद्यमेकादशेऽहनि" इत्याशौचानन्तरदि-नपरम्। "अथाशौचापगमे" इति विष्णूक्तेः इति वदन्तः--

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः॥

च। यद्यपि "मासादौ मासिकं कार्यमिति वचनात्प्रथममासिकस्य मृताहकर्तव्यता प्रतीयते, तथापि मृताहस्याशौचेन प्रतिबन्धात् आद्यमेकादशेऽहनीतिवचनाच्चैकादशेऽह्न्येव तत्कर्तव्यता निश्चीयते। अत एव—

"ब्राह्मणं भोजयेदाद्ये होतव्यमनलेऽथवा।
पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिह॥

इति गोभिलेन प्रथममासिकार्थं द्वितीयावृत्तिरुक्ता एकोद्दिष्टस्य।

केचित्तु आद्यमासिकवदाद्याब्दिकस्यापि "आद्यमेकादशेऽहनीति वचनादेकादशाहएव कर्तव्यत्वात् आद्यमासिकमाद्याब्दिकं च करिष्ये इति सङ्कल्प्य तन्त्रेण द्वयमप्येकादशाहएव कार्यमित्याहुः।

अन्ये तु—

मासादौ मासिकं कार्यमाब्दिकं वत्सरे गते।
आद्यमेकादशे कार्यमधिकेत्वाधिकं भवेत्॥

इति लौगाक्षिवचनात् द्वितीयवर्षारम्भएव प्रथमाब्दिकं, न त्वेकादशाहे। ततश्चाद्याब्दिकाभिप्रायेण न "द्विरावृत्तिर्भवेदिह" इति

---

इति शङ्खवचनस्य—

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्।
चतुर्णामपि वर्णानां सूतकं तु पृथक् पृथक्॥

इति पैठीनसिवचनस्य च अनाकरत्वं च वदन्तः वाचस्पत्यादयः हेमाद्र्यादिमहानिबन्धविरोधात् उपेक्ष्याः।

एकादशेऽहनि तथा विप्रानेकादशैवतु।
क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान्॥

इति मात्स्यादिवचनैः क्षत्रियाणामाद्यश्राद्धं एकादशाहे, आशौचान्ते वाऽनुष्ठेयमिति विकल्पः केषां चित्संमतः। वस्तुतस्तु सद्यःशौचादौ युद्धहतादेः क्षत्रियस्य एकादशाहे, अन्येषां क्षत्रियाणामशौचान्ते इति व्यवस्थायाः सूपपादत्वात् न विकल्प इति।

पूर्वोक्तवचनस्य सङ्गतिः । अतो न तन्त्रेणापि तयोरनुष्ठानं किन्तु स्वतन्त्रं महैकोद्दिष्टं कृत्वा प्रथममासिकस्य पुनरनुष्ठानम् ।

अथवा वह्नौ होमपक्षे एव द्विरावृत्तिर्न तु ब्राह्मणभोजनपक्षे । अत आद्यश्राद्धप्रथममासिकयोस्तन्त्रेणानुष्ठानम् । एवमेकादशाहे विहितस्य नवश्राद्धस्यापि तन्त्रेणैवानुष्ठानपक्षमाश्रित्य प्रयोगो लिख्यते(१) ।

नद्यादौ गत्वा हस्ते जलादिकमादाय देशकालौ सङ्कीर्त्य एकादशाहश्राद्धाधिकारसिद्ध्यर्थं स्नानमहं करिष्ये इति सङ्कल्प्य

---

(१) एकोद्दिष्टविधिस्तु कात्यायनेन श्राद्धकल्पे उक्तः-"अथैकोद्दिष्टम्-एकोर्घः, एकं पवित्रम्, एकः पिण्डो, नावाहनम्, नाग्नौकरणम्, नात्र विश्वेदेवाः, स्वदितमिति तृप्तिप्रश्नः, सुस्वदितमितीतरे ब्रूयुः, उपतिष्ठतामित्यक्षय्यस्थाने, अभिरम्यतामिति विसर्गः, अभिरताः स्म इतीतरे" इति ।

आशिषो द्विगुणा दर्भा जपाशीः स्वस्तिवाचनम् ।
पितृशब्दः स्वसम्बन्धः शर्मशब्दस्तथैवच ॥
पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम् ।
तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैवच ॥
प्रदक्षिणा विसर्गश्च सीमान्तगमनं तथा ।
अष्टादशपदार्थांश्च प्रेतश्राद्धे विवर्जयेत् ॥

इति रत्नावल्याम् एकोद्दिष्टे मोटकादयः पदार्थाः निषिद्धाः । अत्र रेखाकरणोल्मुकनिधानयोरपि निषेधात् क्वचित् पद्धतौ तदुल्लेखो भ्रान्तिमूलक एव । इदं च एकादशाहे एकोद्दिष्टश्राद्धमावश्यकम्—

एकादशाहे यच्छ्राद्धम् एकोद्दिष्टं समाचरेत् ।
यदि वाऽपि न कुर्वीत पुनः संस्कारमर्हति ॥

इति बृहस्पतिस्मृतेः ।

एकोद्दिष्टं ततः कुर्यात् मृतस्यैकादशेऽहनि ।
तत्र श्राद्धं न कुर्याच्चेत्पुनः संस्कारमर्हति ॥

इति शातातपस्मृतेश्च ।

स्नात्वा धौते वाससी परिधाय पाकं निर्वर्त्य श्राद्धदेशं गत्वा दीपं प्रज्वलय्याचम्य पुण्डरीकाक्षस्मरणं कृत्वा एकस्मिन् पलाशपत्रे कुशमयीं पूर्वं निष्पादितां द्विजदम्पतिप्रतिकृतिम् अन्यं वा कुशबटुं संस्थाप्य निमन्त्रयेत्। (स्त्रियामपि गतोसीत्येव पाठः)।

गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः।
मनसा वायुभूतेन विप्रे त्वाहं नियोजये॥
पूजयिष्यामि भोगेन ( एवंविप्रंनिमन्त्रयेत् )।

ब्राह्मणमाहूय तैलाभ्यङ्गं कारयित्वोदङ्मुखमुपवेश्य स्वयं दक्षिणाभिमुखो भूत्वा अमुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) एतत्ते पाद्यमुपतिष्ठतामिति। पादार्घं सम्पाद्य अद्येहामुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) एष पादार्घस्तवोपतिष्ठताम्। ततोऽन्यासने ब्राह्मणम् उपवेश्य भूमावेकं कुशं संस्थाप्य तदुपरि पत्रपुटादिपात्रं स्थापयित्वा तत्रैकशिखं पवित्रं दत्त्वा जलेनापूर्य गन्धाक्षततिलादि तूष्णीं निक्षिप्य एवं कर्मपात्रं विधाय हस्ते कुशादिकमादाय अमुकगोत्रस्यामुकप्रेतस्य ( गोत्रायाः प्रेतायाः ) प्रेतत्वविमुक्तिपूर्वकाक्षयस्वर्गलोकप्राप्तये एकादशाहनिमित्तकमाद्यश्राद्धं नवश्राद्धं प्रथममासिकश्राद्धं चार्घपिण्डसहितं तन्त्रेणाहं करिष्य इति प्रतिज्ञाय ( गोत्रायाः प्रेतायाः ) अमुकगोत्रस्यामुकप्रेतस्यैतत्कुशासनं तवोपतिष्ठतामित्यासनं दत्त्वा कर्मपात्रोक्तरीत्या हस्तार्घं विधाय अमुकगोत्रामुकप्रेत (गोत्रे प्रेते) एष हस्तार्घस्तवोपातिष्ठताम् इति हस्तार्घं दत्त्वा ब्राह्मणं वस्त्रगन्धादिभिरभ्यर्च्य अद्येहामुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) अर्चनविधाविमानि गन्धाक्षतपुष्पधूपदीपनैवेद्यवासोद्रव्यादिकानि मद्दत्तानि तवोपतिष्ठन्तामित्युच्चार्य विप्रपाणौ जलं क्षिपेत्। अन्नं परिविष्य अमुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) इदमन्नं सोपस्करं

यत्पारिविष्टं तत्ते उपतिष्ठतामिति विप्रकरे सकृदपो दत्त्वा भुङ्क्ष्वेत्यनुज्ञां दत्त्वा तृप्तं ज्ञात्वा स्वदितमिति तृप्तिप्रश्नं कृत्वा सुस्वदितमिति प्रत्युक्ते पुनरपो दत्त्वा घृतमधुतिलक्षीरमिश्रं बिल्वमात्रं पिण्डं मध्वन्नबलिं च कृत्वा वितस्तिमात्रीं वेदिं कृत्वा उपलिप्य अमुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) इदमवनेजनं तवोपतिष्ठताम् । आसनार्थे कुशानास्तीर्य अमुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) एकादशाहेऽनुष्ठीयमानाद्यश्राद्धनवश्राद्धप्रथममासिकश्राद्धसम्बन्धी एषोऽन्नपिण्डो मद्दत्तस्तवोपतिष्ठताम् । अमुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) इदं प्रत्यवनेजनं तव० । ततः पिण्डं गन्धाक्षतधूपदीपादिभिरभ्यर्च्य अमुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) पिण्डार्चनविधौ इमे गन्धाक्षतभृङ्गराजपत्रधूपदीपोर्णासूत्रमध्वन्नबलयो मद्दत्तास्तवोपतिष्ठन्ताम् । अमुकगोत्रस्यामुकप्रेतस्य (गोत्रायाः प्रेतायाः) एकादशाहेऽनुष्ठीयमानाद्यश्राद्धनवश्राद्धप्रथममासिकश्राद्धेषु इदमन्नोदकादि यद्दत्तं तत् तवोपतिष्ठताम् । अमुकगोत्रस्यामुकप्रेतस्य (गोत्रायाः प्रेतायाः) तन्त्रेण कृतानामेकादशाहनिमित्तकाद्यश्राद्धनवश्राद्धप्रथममासिकश्राद्धानां साङ्गतासिद्ध्यर्थमिदं रजतं तन्निष्क्रयद्रव्यं वा ब्राह्मणाय दीयमानं तवोपतिष्ठताम् । अमुकगोत्रस्यामुकप्रेतस्य (गोत्रायाः प्रेतायाः) एकोद्दिष्टविधानेनैकादशाहनिमित्तकमाद्यश्राद्धं नवश्राद्धं प्रथममासिकश्राद्धं च यत्कृतं तत्तव विप्रस्य प्रसादात्सुकृतं भवतु इति प्रार्थ्य अभिरम्यतामिति विसृजेत् । 'अनादिनिधनो देव' इति पठित्वा कर्मपात्रं विप्रपादाभ्यां निनीयाचामेत् । यस्य स्मृत्येति पठेत् ।

एतत्कर्मापसव्येन वामजानु निपात्य दक्षिणाभिमुखः पितृतीर्थेनैककुशेन च कुर्यात् । आद्यश्राद्धान्ते स्नानं कुर्यात् ।

अनेनैव विधिना सर्वाणि प्रेतश्राद्धानि ऊनमासिकादीनि ऊना-ब्दिकान्तानि सपिण्डनाधिकारप्राप्त्यर्थं क्रमेण कुर्यात्(१)।

(१) एतानि च यदा सपिण्डनात् पूर्वं युगपत्कुर्यात् तदा देश-कालकर्त्रैक्ये तन्त्रत्वादेकः पाक इति संप्रदायः। पाकभेद इति भट्टाः।
केचित्तु देशकालदेवतैक्ये तन्त्रत्वात् श्राद्धकालातिक्रमापत्तेः—

द्वादशाहेऽथ सर्वाणि संक्षेपेण समाचरेत्।
तान्येव तु पुनः कुर्यात् प्रेतशब्दं न कारयेत्॥

इति कात्यायनोक्तेः,

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न कारयेत्।

इति जाबालोक्तेश्च षोडशसंख्यायाश्च वाजपेये प्राजापत्ययाग-सप्तदशत्ववत् सान्नाय्ययागद्वित्ववच्च दर्श–पात–संक्रान्तिश्राद्धवत् युगपदनुष्ठानेऽप्युपपत्तेः 'ऊनमासिकाद्यूनाब्दिकान्तश्राद्धेषु भवान् मया निमन्त्रितः' इत्येवं प्रयोगेण एको विप्रः पिण्डोऽर्घ्यश्चेत्याहुः। तन्न।

द्वादशाहेन वा भोज्या एकाहे द्वादशापि वा।

इति हेमाद्रौ हारीतवचोविरोधात्। तेन विप्रभेदात् पिण्डार्घ्या-दिकं भिन्नमेवेति। तेनात्र पृथक्प्रयोग एवोत्कृष्टः प्राकृतेष्ट्याग्रयण-प्रयोगवत्। सौकर्यार्थं तु तत्प्रयोगसमासः अग्नीषोमीयप्रायश्चित्तप शुप्रयोगसमासवत् इति बोध्यम्।

इमानि च येषां मते महैकोद्दिष्टात् भिन्नं प्रथममासिकं तेषां मते षोडश दाक्षिणात्यादीनाम्। येषां मते प्रथममासिकस्य महैकोद्दिष्ट-रूपादाद्यश्राद्धात् न पृथक् प्रयोगः, तेषां मते ऊनमासिकादीनि ऊनाब्दिकान्तानि पञ्चदशैव श्राद्धानि। आद्यश्राद्धेन मिलित्वा तु षोडश भवन्ति। इदमेव च उत्तमं षोडशकमिति गीयते।

द्वादश प्रतिमासेषु पाक्षिकं च त्रिपाक्षिकम्।
न्यूनषाण्मासिकं पिण्डं दद्यात् न्यूनाब्दिकं तथा॥
उत्तमं षोडशं चैतत् मया ते परिकीर्तितम्।
श्रपयित्वा चरुं तार्क्ष्य कुर्यादेकादशेऽहनि॥

इति गारुडात्। पाक्षिकशब्देन ऊनमासिकम्। पक्षेऽतीते तद्विधानात्।

मलिनषोडशकं तु स्थानादिषट्पिण्डाः, दशाहिका दश पिण्डाश्च।

मध्यमं षोडशकं च—

प्रथमं विष्णवे दद्यात् द्वितीयं श्रीशिवाय च ।

इत्यादिना गारुडे कथितम् । षोडशकत्रयानन्तरं च पितृत्वप्राप्तिः तत्रोक्ता—

चत्वारिंशत्तथैवाष्टौ श्राद्धं प्रेतत्वनाशनम् ।

यस्य जातं विधानेन स भवेत् पितृपङ्क्तिभाक् ॥ इति ।

परन्तु मध्यमस्य षोडशकस्य अनुष्ठानप्रचारो बहुत्र न दृश्यते ।

एतानि द्वादशाहादौ सपिण्डनात्पूर्वं कृतान्यपि वृद्धिं विना अपकर्षे पुनः स्वकाले कार्याणि ।

यस्य संवत्सरादर्वाक् सपिण्डीकरणं कृतम् ।

मासिकं चोदकुम्भं च देयं तस्याऽपि वत्सरम् ॥

इति मदनरत्ने अङ्गिरसोक्तेः ।

यद्यपि-यस्य संवत्सरादर्वाक् विहिता तु सपिण्डता ।

विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश ॥

इति माधवीये गोभिलवचनात् सपिंण्डनोत्तरं षोडशानामेकादशाहे सपिण्डने, द्वादशाहे सपिण्डने पञ्चदशानां वा आवृत्तिः प्रतीयते, तथापि "अनुमासिकानि तु त्र्यरेत् तान्येव सापिण्ड्यतः पश्चाद्द्वादश" इति दीपिकायामुक्तेः ऊनमासिकादीनि चत्वारि न पुनरनुष्ठीयन्ते पर्वतीयैः । द्वादशेत्युक्तिरेकादशाहसपिण्डनाभिप्रायेण । अत एव—

"ततः सपिण्डनादूर्ध्वम् अर्वाक् संवत्सरादपि ।

प्रतिमासं प्रदातव्यो जलकुम्भः सपिण्डकः ॥

कृतस्य करणं नास्ति प्रेतकार्यादृते खग ।

प्रेतार्थंतु पुनः कुर्यात् अक्षयतृप्तिहेतवे ॥

इति गारुडे सपिण्डनोत्तरं प्रतिमासमेव सपिण्डकजलकुम्भदानमुक्तम् , नतु ऊनमासिकादौ । आङ्गिरसवचनस्वारस्यं च तत्रैव । तस्मात् सपिण्डनोत्तरं प्रतिमासमेव मासिकश्राद्धसमाचारः पर्वतीयानाम् । नेपालवासिकौर्माचलानां तु ऊनमासिकाद्याचरणमपि सपिण्डनोत्तरं भवत्येव । तत्र मूलं गोभिलादिवचनम् । वृद्धिप्राप्तौतु पुनरपि मासिकापकर्षः कर्त्तव्यः कार्ष्णाजिनिवचनात् । वृद्ध्यनन्तरं कात्यायनेन तन्निषेधाच्चेति बोध्यम् ।

सति सामर्थ्ये प्रतिश्राद्धान्ते स्नानं कुर्यात् । अन्यथा मार्जनं कुर्यात् । सर्वान्ते तु स्नानमावश्यकमेवेति ।

तानि च ऊनमासिक-द्वितीयमासिक-त्रैपक्षिक-तृतीयमासिक-चतुर्थमासिक-पञ्चममासिक-षष्ठमासिको-नषाण्मासिक-सप्तममासिका-ष्टममासिक-नवममासिक-दशममासिकै-कादशमासिक-द्वादशमासिको-नाब्दिकरूपाणि । वर्षमध्येऽधिकमासपाते तु यस्मिन्मास्यधिकमासपातस्तस्मिन् तदावृत्तिः कार्या। तत्राप्यधिमासनिमित्तकं श्राद्धं प्रथमं शुद्धमासिकश्राद्धं तु पश्चात् कार्यम् ।

यद्वा एतानि समानतन्त्रेण कुर्यात् ।

ऊनमासिकादीनां प्रयोगसमासः ।

पञ्चदश (अधिकमासपाते षोडश) कुशवटून् पश्चिमतः प्राक्संस्थान् पालाशपत्रेषु क्रमेण संस्थाप्य दीपं प्रज्वलय्याचम्य —

गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः ।
मनसा वायुभूतेन विप्रे त्वाहं नियोजये ॥

पूजयिष्यामिभोगेन ( एवं विप्रं निमन्त्रयेत् ) इति मन्त्रेणैकैकं निमन्त्र्य तैलाभ्यङ्गपूर्वकं स्नापयित्वा सिद्धे पाके उदङ्मुखानुपवेश्य स्वयं दक्षिणाभिमुखो भूत्वा अमुकगोत्रामुकप्रेत (गोत्रे प्रेते) ऊनमासिकश्राद्धे एष पादार्घस्तवोपतिष्ठताम् । इति पादार्घं दत्वा अन्यब्राह्मणेष्वपि एवमेव द्वितीयमासिकाद्युल्लेखपूर्वकं पादार्घन्दद्यात् । ततोऽन्यासनेषु ब्राह्मणानुपवेश्य भूमावेकं कुशं संस्थाप्य तदुपरि पात्रं स्थापयित्वा तदुपर्येकशिखं पवित्रं दत्वा जलेनापूर्य गन्धाक्षततिलादीन् तूष्णीं निक्षिप्य हस्ते कुशजलादिकं गृहीत्वा देशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिपूर्वकाक्षयस्वर्गप्राप्तये द्वादशाहे करिष्यमाणसपिण्डीकरणाधिकारसिद्ध्यर्थमद्यैकादशाहे अपकृष्य ऊनमासिकद्वि-

तीयमा० त्रैपक्षिक०तृतीयमा०चतुर्थमा०पञ्चममा० षष्ठमा० ऊनषाण्मा० सप्तममा० अष्टममा० नवममा० दशममा० एकादशमा० द्वादशमा० ऊनाब्दिकरूपाणि पञ्चदश श्राद्धानि (अधिकमासे षोडशेतिप्रक्षेपः) एकतन्त्रेणाहं करिष्ये इति प्रतिज्ञासङ्कल्पं कृत्वा अमुकगोत्रस्यामुकप्रेतस्य (गोत्रायाः प्रेतायाः) ऊनमासिकश्राद्धे एतत्कुशासनं मद्दत्तं तवोपतिष्ठताम् इति दत्त्वा एवमेव द्वितीयादिमासिकोल्लेखपूर्वकं सर्वेषां कुशासनं दत्त्वा कर्मपात्रस्थापनरीत्या पञ्चदश षोडश वा हस्तार्घपात्राणि स्थापयित्वा अद्येहामुकगोत्रामुकप्रेत (गोत्रे प्रेते) ऊनमासिकश्राद्धे एष हस्तार्घस्तवोपातिष्ठताम् इति दत्त्वा एवमेव द्वितीयादिमासिकोल्लेखपूर्वकमन्येषामपि हस्तार्घं दत्त्वा ब्राह्मणान् गन्धादिभिरभ्यर्च्य अद्येह अमुकगोत्रामुकप्रेत (गोत्रे प्रेते) अर्चनविधौ इमानि गन्धाक्षतपुष्पधूपदीपवासोद्रव्याणि ऊनमासिकश्राद्धे तवोपतिष्ठन्ताम् इत्युच्चार्य विप्रपाणौ जलं क्षिपेत्। एवमेव द्वितीयादिमासिकेष्वप्यूहनीयम्।

प्राग्वद्ध्या सर्वेषां पुरतोऽन्नं परिविष्य अमुकगोत्रामुकप्रेत (गोत्रे प्रेते) ऊनमासिकश्राद्धे इदमन्नं सोपस्करं यत्परिविष्टं तत्त उपतिष्ठताम्। विप्रकरे सकृदपो दत्त्वा भुङ्क्ष्वेत्यनुज्ञां दत्त्वा तृप्तं ज्ञात्वा स्वदितमित्युक्त्वा सुस्वदितमिति प्रत्युक्ते पुनरपो दद्यात्। एवमेव द्वितीयादिमासिकेष्वपि।

ततो घृतमधुतिलक्षीरमिश्रान् पञ्चदश षोडश वा पिण्डान्निर्माय मध्वन्नबलींश्च तावतः कृत्वा वितस्तिप्रमाणाः पञ्चदश षोडश वा वेदीश्च पुरतः कृत्वा वेदीरुपलिप्य अमुकगोत्रामुकप्रेत (गोत्रे प्रेते) इदमवनेजनमूनमासिकश्राद्धे तवोपातिष्ठताम्। एवमेव सर्वत्र तत्तन्मासिकोल्लेखपूर्वकमवनेजनानि दत्त्वा सर्वत्र कुशानास्तीर्य पिण्डं गृहीत्वा अमुकगोत्रामुकप्रेत (गोत्रे प्रेते) ऊनमासिकश्राद्ध-

सम्बन्धी एषोऽन्नपिण्डो मद्दत्तस्तवोपतिष्ठताम् । एवमेव द्वितीयमासिकाद्युल्लेखपूर्वकं तत्तन्मासिकपिण्डानपि दत्त्वा अमुकगोत्रामुकप्रेत (गोत्रे प्रेते) ऊनमासिकश्राद्धे इदं प्रत्यवनेजनं तवोपतिष्ठताम् । एवमेव द्वितीयमासिकादिषु प्रत्यवनेजनं दत्त्वा गन्धपुष्पभृङ्गराजपत्रोर्णासूत्राक्षतादिभिः पिण्डानभ्यर्च्य अमुकगोत्रामुकप्रेत (गोत्रे प्रेते) ऊनमासिकश्राद्धे पिण्डार्चनविधाविमे गन्धपुष्पाक्षतभृङ्गराजपत्रोर्णासूत्रमध्वन्नवलयो मद्दत्तास्तवोपतिष्ठन्ताम् । एवमेव द्वितीयादिषु अर्चनसङ्कल्पं कृत्वा हस्ते जलादिकं गृहीत्वा अमुकगोत्रस्यामुकप्रेतस्य (गोत्रायाः प्रेतायाः) ऊनमासिकश्राद्धे इदमन्नोदकादि यद्दत्तं तत्तवोपतिष्ठताम् । एवमेवान्यत्राप्यक्षय्योदकं दद्यात् । ततो हस्ते जलादिकं गृहीत्वा देशकालौ सङ्कीर्त्य अमुकगोत्रस्यामुकप्रेतस्य (गोत्रायाः प्रेतायाः) एकादशाहेऽपकृष्यैकतन्त्रेण कृतानामूनमासिकादिपञ्चदश (षोडश) श्राद्धानां साङ्गतासिद्ध्यर्थमिमा रजतदक्षिणाः तन्निष्क्रयदक्षिणा वा ब्राह्मणेभ्यो मया दीयन्ते तास्तवोपतिष्ठन्ताम् इति दक्षिणा दत्त्वा करसम्पुटं कृत्वा अमुकगोत्रस्यामुकप्रेतस्य (गोत्रायाः प्रेतायाः) एकोद्दिष्टविधानेन तन्त्रेणैकादशाहेऽपकृष्यानुष्ठितान्यूनमासिकाद्यूनाब्दिकान्तानि पञ्चदश ( षोडश )श्राद्धानि युष्माकं ब्राह्मणानां प्रसादात्सुकृतानि भवन्त्विति प्रार्थ्य अभिरम्यतामिति विसृजेत् । ततः कर्मपात्रं विप्रपादेभ्यो निनीयाचामेत् । अनादिनिधनोदेव इति यस्य स्मृत्येति च पठेत् । श्राद्धान्ते स्नानं कुर्यात् ।

इति ऊनमासिकादिपञ्चदशश्राद्धसंक्षेपः ।

अथ सपिण्डीकरणम् ।

तच्च द्वादशाहे कार्यम् ।

आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् ।

अस्थिरत्वाच्च देहस्य द्वादशाहे प्रशस्यते ॥

इति व्याघ्रवचनात् ।

द्वादशाहे त्रिपक्षे वा षण्मासे वत्सरेऽपिवा ।
सपिण्डीकरणं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥
यथातु प्रोच्यते तार्क्ष्य शास्त्रधर्मानुसारतः ।
चतुर्णामेव वर्णानां द्वादशाहे सपिण्डनम् ॥
कर्मलोपात्प्रत्यवायी भवेत्तस्मात्सपिण्डनम् ।
निरग्निकः साग्निको वा द्वादशाहे समाचरेत् ॥
अतः स्नात्वा मृतस्थाने गोमयेनोपलेपिते ।
शास्त्रोक्तेन विधानेन सपिण्डीं कारयेत्सुतः ॥

इति गारुडाच्च ।

अथ सपिण्डीकरणश्राद्धप्रयोगः ।

तद्दिने प्रातः कृतनित्यक्रियो मध्याह्ने प्रशस्तजलाशयं गत्वा सपिण्डीकरणाधिकारार्थं स्नानं करिष्ये इति सङ्कल्प्य स्नात्वा कस्मिंश्चिद्गोमयोपलिप्तप्रदेशे मण्डलत्रयं कुर्यात्। तत्र करिष्यमाणपितृमण्डलत उत्तरे वैश्वदेवमण्डलं चतुष्कोणं कृत्वा, तद्दक्षिणपश्चिमायां प्रेतमण्डलं त्रिकोणं वर्तुलं वा कृत्वा, प्रेतमण्डलतः पूर्वस्यां प्रेतपित्रादिमण्डलं वर्तुलं कुर्यात् । ततो नवभाण्डेषु प्रेतश्राद्धपाकं पित्रादिश्राद्धपाकं च पृथग्विधाय पूर्वकृतेषु त्रिषु मण्डलेषु क्रमेण वैश्वदेविकं ब्राह्मणं प्रेतब्राह्मणं पित्रादिब्राह्मणं च संस्थाप्य दाक्षिणाभिमुखं दीपं प्रज्वलय्य परिहितधौतवस्त्रः प्राङ्मुखः आसने समुपविश्याचम्य—

यं ब्रह्म वेदान्तविदो वदन्ति, परे प्रधानं, पुरुषं ततोऽन्ये ।
विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय ॥
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।

सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥
शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

इति गणेशादीन् स्मृत्वा कुशवटून् तैलाभ्यङ्गपूर्वकं संस्नाप्य पलाशादिपत्रमयासनेषु पूर्वोक्तमण्डलेषूपवेश्य यवान् गृहीत्वा एतन्ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे। तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ मनो जूतिर्जुषतामा-ज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु। विश्वेदेवास इह मादयन्तामोंप्रतिष्ठ (य०सं०२। ११-१२) ॐ भूर्भुवःस्वः विश्वदेवसम्बन्धिकुशब्रह्मन् सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठाप्य—

कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः पुरा ।
त्वय्यर्चिते सोऽर्चितोऽस्तु यस्याहं नाम कीर्तये ॥

इति पठित्वा ततः अक्षतान् गृहीत्वा 'एतन्त' इत्यादिपाठान्ते ॐभूर्भुवः स्वः पितृसम्बन्धिकुशब्रह्मन्सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठाप्य पूर्ववत् कुशोऽसीति पठेत् ।

ततो यवान् गृहीत्वा वैश्वदेवब्राह्मणं प्राङ्मुखं स्वयमुदङ्मुखः निमन्त्रयेत् । अद्येह अमुकगोत्रामुकप्रेतपित्रादित्रयश्राद्धसम्बन्धिनां(प्रेताश्वश्र्वादित्रयश्राद्धसम्बन्धिनां)(१)कालकामसंज्ञकानां विश्वेषां देवानां कृत्ये करिष्यमाणसापिण्डीकरणश्राद्धे भवान्मया निमन्त्रितः । निमन्त्रितोऽस्मीति प्रतिवचनम् । अञ्जलिं बध्वा प्रार्थयेत्--

अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥

(१) कामकालेति क्वचित् पाठः ।

सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि ॥

आगतं वः स्वागतम् । एतद्वः पाद्यम् । गन्धाक्षतपुष्पादिभिः पादपूजां विधाय पादार्घं सम्पाद्य हस्ते गृहीत्वा अद्येह अमुकगोत्रप्रेतपित्रादित्रयश्राद्धसम्बन्धिनः ( प्रेताश्वश्र्वादित्रयश्राद्धसम्बन्धिनः) कालकामसंज्ञका विश्वेदेवाः एष पादार्घो वोऽस्तु । इति पादार्घं दद्यात् ।

(१)ततः प्रेतमण्डलं गत्वा कृतापसव्यो वामं जानु निपात्य दक्षिणाभिमुखः तिलान् गृहीत्वा —

गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः ।
मनसा वायुभूतेन विप्रे त्वाहं नियोजये ॥

पूजयिष्यामि भोगेन" इति पठित्वा 'प्रेतकृत्ये भवान्मया निमन्त्रित' इत्युत्तराभिमुखं निमन्त्रयेत् । निमन्त्रितोऽस्मीति प-

---

(१) अत्र "प्रेते एकोद्दिष्टं पितृषु पार्वणं कृतपच्छौचानाचान्तान्द्वौ दैवे पूर्ववत् अथ प्रथमं प्रेतम् अनन्तरं पितॄन् पूर्ववदुपवेश्य देवानभ्यर्च्याथ पित्र्येऽर्घ्यपात्रासादनान्ते चतुर्ष्वर्घ्यपात्रेषु दर्भानयुग्मानन्तर्धायाप आसिच्य सकृदनुमन्त्र्य प्रेताऽर्घ्ये तूष्णीं तिलानोप्य अन्येषु मन्त्रेणावपेत् तानि चत्वारि गन्धादिभिरभ्यर्च्य(र्च्यै)रथ प्रेतपात्रं प्रेताय तूष्णीं निवेद्यार्घ्योदकं चतुर्थांशं दत्त्वांशत्रयं त्रिषु पितृपात्रेषु "समानी व आकूतिरिति निनयेत्"इति आश्वलायनगृह्यपरिशिष्टे (अ०३।११) दैवब्राह्मणोपवेशनपूर्वकं प्रेतब्राह्मणोपवेशनं विधाय पितृब्राह्मणानां पश्चादुपवेशनविधानात् अर्घ्यपात्रोदकदानस्याऽपि प्रेताय पूर्वं विधानात् देवकृत्यानन्तरं प्रेतकृत्यं पूर्वं कृत्वा ऽनन्तरं पितृकृत्यं कर्तव्यमिति लभ्यते । अन्यत्र दैवपित्र्यकृत्ययोरव्यवधानेऽपि अत्र प्रेतकृत्येन व्यवधानं सोढव्यमेव । प्रेतसपिण्डीकरणार्थमेव तत्प्रस्तावात् । संमतं च दैवपित्र्यकृत्ययोर्मध्ये प्रेतकृत्यकरणं वाचस्पत्यादीनाम् । अतस्तदनुसारेणैव प्रयोगो निर्दिष्ट इति बोध्यम् ।

तिवचनम् । अक्रोधनैरित्यादिपादपूजनान्तं विधाय पादार्घं सम्पाद्य हस्ते गृहीत्वा अद्येहामुकगोत्रामुकप्रेत (गोत्रे प्रेते) एष पादार्घस्तवोपतिष्ठतामिति दत्त्वा सव्येनाचम्य पञ्चगव्येनाभिषिक्तः पित्रादिमण्डलं गच्छेत् ।

तत्र वामं जातु निपात्य कृतापसव्यो दाक्षिणामुखः तिलान् गृहीत्वोत्तराभिमुखं (१)पित्रादिब्राह्मणं निमन्त्रयेत् ।

---

(१) व्युत्क्रममृते तु हेमाद्रौ ब्राह्मे—

मृते पितरि यस्याथ विद्यते च पितामहः ।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ॥
तेभ्यस्तु पैतृकः पिण्डो नियोक्तव्यस्तु पूर्ववत् । इति ।

एवं च पितामहजीवने सर्वत्र सङ्कल्पवाक्ये प्रेतपितामहप्रपितामहवृद्धप्रपितामहानाम् इत्यादिकं योज्यम् । एवं—

मातर्यपि मृतायां च विद्यते च पितामही ।
प्रपितामहीपूर्वस्तु कार्यस्तत्राप्ययं विधिः ॥

इत्युक्तरीत्या पितामहीजीवनेऽपि मातुर्मरणे सङ्कल्पवाक्ये प्रेतावृद्धश्वश्रूवृद्धतरश्वश्रूवृद्धतमश्वश्रूणाम् इत्यादिकं योज्यम् । एवं प्रपितामहादिजीवनेप्यूह्यम् ।

व्युत्क्रमात्तु प्रमीतानां नच कार्या सपिण्डता ।

इति तु–माता, पितृ, भर्तृभिन्नविषयम् ।

व्युत्क्रमेण मृतानां न सपिण्डीकृतिरिष्यते ।
यदि माता यदि पिता भर्ता नैष विधिः स्मृतः ॥

इति स्कान्दोक्तेः ।

वस्तुतस्तु व्युत्क्रममृतानां सर्वेषामेव सपिण्डीकरणं शिष्टाचारपरम्परासिद्धमिति । तदुक्तं निर्णयसिन्धौ केचित् सर्वत्र सपिण्डनमाहुरिति ।

अत्र प्रपितामहादिभिः पितुः सपिण्डने कृते अनन्तरं पितामहे मृते तत्सपिण्डने जाते कृतसपिण्डनेन पितामहेन सह पितुः सपिण्डनं पुनः कार्यमिति हेमाद्रिः कस्यचिन्मतमाह ।

अन्ये नैतदनुमन्यन्ते । किन्तु केनचिन्निमित्तेन पितुः सपिण्डना-

अद्येहामुकगोत्राणां प्रेतपितृपितामहप्रपितामहानाममुकामुकशर्मणां ( प्रेताश्वश्रूवृद्धश्वश्रूवृद्धतरश्वश्रूणाममुकामुकदेवीनां ) वसुरुद्रादित्यस्वरूपाणां कृत्ये करिष्यमाणसपिण्डीकरणश्राद्धे भवान्मया निमन्त्रित इति। निमन्त्रितोऽस्मीति प्रतिवचनम्। ततः अक्रोधनैरित्यादि पठित्वा सव्येन आगतं वः स्वागतम्। अपसव्येन एतद्वः पाद्यमिति पादपूजान्तं विधाय पादार्घं सम्पाद्य हस्ते गृहीत्वा अद्येहामुकगोत्राः प्रेतपितृपितामहप्रपितामहाः अमुकामुकशर्माणो ( प्रेताश्वश्रूवृद्धश्वश्रूवृद्धतरश्वश्र्वोऽमुकामुकदेव्यः ) वसुरुद्रादित्यस्वरूपा अस्मिन्सापिण्डीकरणश्राद्धे एष पादार्घो वोऽस्तु इति।

ततः सव्येनाचम्य वैश्वदेविकमण्डलं गत्वा तत्रत्यं ब्राह्मणमाचाम्य

प्रेतमण्डलं गत्वा अपसव्येन प्रेतब्राह्मणमाचाम्य

पञ्चगव्येनाभिषिक्तः पितृमण्डलं गत्वा पितृब्राह्मणमाचाम्य

पुनर्वैश्वदेवमण्डलं गत्वा सव्येन तद्ब्राह्मणं श्राद्धदेशे प्राङ्मुखमुपवेश्य

प्रेतमण्डलं गत्वाऽपसव्येन तद्ब्राह्मणमुदङ्मुखमुपवेश्य पञ्चगव्येनाभिषिक्तः पितृमण्डलं गत्वा पितृब्राह्मणमुदङ्मुखं श्राद्धदेशे समुपवेशयेत्।

ततः स्ववामभागे सव्येन कर्मपात्रस्थापनम्। पूर्वम्

---

भावे पितामहे मध्ये मृते तत्सपिण्डने जाते अनन्तरं पितुः सपिण्डनं पितामहेन सह कार्यम्। न तु पितुः सपिण्डने प्रपितामहादिभिः कृते पुनः पितामहेन सह कार्यम्।

त्रयाणामपि पिण्डानाम् एकेनाऽपि सपिण्डने।
पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः॥

इति विष्णुधर्मोक्तेः इति निर्णयसिन्ध्वादौ स्पष्टम्।

ॐभूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ( य०सं०१३।१८ ) ॥ इति भूमिं स्पृष्ट्वा तत्र चन्दनेन चतुष्कोणं कृत्वा तदुपरि शङ्ख-चक्रे लिखित्वा तदुपरि पूर्वाग्रदर्भैरासनं कृत्वा तदुपरि कर्मपात्रं संस्थाप्य तत्र "पवित्रे स्थो वैष्णव्यौ" इति (य०सं०१।१२) पवित्रे निक्षिप्य "शन्नो देवीरभिष्टयआपो भवन्तु पी-तये । शँयोरभिस्रवन्तु नः" इति ( य०सं०३६।१२ ) जलेनापूर्य "यवोऽसि यवयास्मद्द्वेषो यवयारातीः" इति ( य०सं०५।२६ ) यवान् क्षिप्त्वा "तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहा" इति ( का०श्रा०सू०कं०२) तिलान्निक्षिप्य गन्धपुष्पाक्षतादीनि तूष्णीं निक्षिपेत् ।

आवाहयाम्यहं देवं वरुणं भुवनेश्वरम् ।
सर्वौषधिरसं दिव्यममृतं प्राणधारकम् ॥
अपांपते जगन्नाथ रसरूप गदाधर ।
पद्मोद्भव इहागच्छ शक्रेण सहितः प्रभो ॥
सगणश्च सभार्यश्च शिशुमारैकवाहन ।
एहि देव जलाध्यक्ष पात्रेऽस्मिन्सन्निधिं कुरु ॥

"इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामव-स्युराचके" ॥ इति ( य०सं०२१।१ ) वरुणमावाह्य—

कर्मपात्रं सुसम्पन्नमिति कर्ता । सुसम्पन्नमिति प्रतिवचनम् । तेन जलेन—

ॐअपवित्रः पवित्रो वा सर्वावस्थां गतोऽपिवा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

इत्यात्मानं श्राद्धसामग्रीं च सम्प्रोक्ष्य प्राणायामं विधाय

देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच ।
नमः स्वाहायै स्वधायै नित्यमेव नमोनमः ॥

इति त्रिर्जपेत् । ततोऽपसव्येन—

सप्त व्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरासि मानसे ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥
श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।

मनसा च पितॄन् ध्यात्वा ततः सपिण्डीकरणश्राद्धं समारभे इति कर्ता । समारभस्वेति प्रतिवचनम् । ततः त्रिभिर्दर्भैः कर्मपात्रस्थजलमभिमन्त्रयेत्—

यद्देवा देवहेडनं देवासश्चकृमा वयम् ।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥

यदि दिवा यदि नक्तमेनाꣳसि चकृमा वयम् । वायुर्मातस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ यदि जाग्रद्यदि स्वप्नएनाꣳसि चकृमा वयम् । सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ ( य०सं०२०।१४-१५-१६ )

इत्यभिमन्त्र्य शूद्रादिदुष्टदृष्टिनिपातात्पाकः पुतोऽस्त्विति तज्जलेन पाकं प्रोक्ष्य द्वारदेशे पितर इहागच्छतेत्युदकाञ्जलिं निक्षिपेत् ।

ततः सव्येन प्रतिज्ञासङ्कल्पः ।

कर्मपात्रतः कुशजलादिकमादाय देशकालकीर्तनान्ते अमुकगोत्रस्यामुकप्रेतस्य ( गोत्रायाः प्रेतायाः ) प्रेतत्वविमुक्तये पितृपदप्राप्त्यै अमुकगोत्रैः प्रेतपितृपितामहप्रपितामहैरमुकामु-

कशर्मभिर्वसुरुद्रादित्यस्वरूपैः सह ( अमुकगोत्राभिः प्रेताश्व-श्रूवृद्धश्वश्रूवृद्धतरश्वश्रूभिरमुकामुकदेवीभिः वसुरुद्रादित्यस्वरू-पाभिः सह ) कालकामसंज्ञकविश्वेदेवपूर्वकमर्घ्यपिण्डसहितं पार्वणैकोद्दिष्टविधानेन सापिण्डीकरणश्राद्धमहं कारिष्य इति । कुरुष्वेत्यनुज्ञातः अपसव्येन तिलमोटकं गृहीत्वा—

ॐ सोमस्य नीविरसि विष्णोः शर्मासि शर्म यज-मानस्येन्द्रस्य योनिरसि सुसस्याः कृषीस्कृधि ॥ इति (य०सं०४।१०) वामकक्ष्यां नीविं बध्वा मोटकातिलैर्दिग्बन्धनं सव्येन कुर्यात् ।

अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।
तथा बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः ॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ।
विदिशश्च गणाः सर्वे रक्षन्तूर्ध्वमधोऽपिवा ॥
रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ।
सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥
तिला रक्षन्तु दितिजात्(न्) दर्भा रक्षन्तु राक्षसात्(न्) ।
पङ्क्तिं वै श्रोत्रियोरक्षेदातिथिः सर्वरक्षकः ॥

निहन्मि सर्वं यदमेध्यमत्र हताश्च सर्वेऽसुरदानवा मया ।
रक्षांसि यक्षाः सपिशाचगुह्यका हता मया यातुधानाश्चसर्वे ॥
इति ।

ततो वैश्वदेविकमण्डलं गत्वा ऋजुकुशैरासनं सव्येन दद्यात् । कुशद्वयं गृहीत्वा अद्येहामुकगोत्रप्रेतपित्रादित्रयश्राद्धसम्ब-न्धिनां (प्रेताश्वश्र्वादित्रयश्राद्धसम्बन्धिनां) कालकामसंज्ञकानां विश्वेषां देवानां सपिण्डीकरणश्राद्धे इदमासनमस्तु ॐ भूर्भुवः स्वः इदमासनमास्यताम् । आसे इति प्रतिवचनम् ।

ततः प्रेतमण्डलं गत्वाऽपसव्येन तूष्णीं कर्मपात्रं भूमौ कुशास्तरणादिना विधाय अद्येह अमुकगोत्रस्यामुकप्रेतस्य (गोत्रायाः प्रेतायाः) सपिण्डीकरणश्राद्धे एतत्ते आसनमुपतिष्ठताम् । इत्यासनं दद्यात् ।

ततः पञ्चगव्येनाभिषिक्तः पितृमण्डलं गत्वा अपसव्येन मोटकासनं दद्यात् । अद्येहामुकगोत्राणां प्रेतपितृपितामहप्रपितामहानाममुकामुकशर्मणां ( प्रेताश्वश्रूवृद्धश्वश्रूवृद्धतरश्वश्रूणाममुकामुकदेवीनां ) वसुरुद्रादिसस्वरूपाणां सपिण्डीकरणश्राद्धे इदं मोटकासनमस्तु । ॐ भूर्भुवः स्वरिदमासनमास्यताम् । आसे इति प्रतिवचनम् । ततो वैश्वदेविकमण्डलं गत्वा सव्येन यवान् गृहीत्वा विश्वान् देवानावाहयेत्—अद्येहामुकगोत्रप्रेतपित्रादित्रयश्राद्धसम्बन्धिनः (प्रेताश्वश्र्वादित्रयश्राद्धसम्बन्धिनः) कालकामसंज्ञकान् विश्वान्देवानावाहयिष्ये इति पृष्ट्वा आवाहयेत्यनुज्ञातः—

ॐ विश्वेदेवास आगत शृणुता म इमᳬं हवम् ।
एदं बर्हिर्निषीदत इत्यावाह्य(य०सं०७।३४) (१)यवान् विकीर्य अञ्जलिं बध्वा ॐ विश्वेदेवाः शृणुतेमᳬं हवं मे ये अन्तरिक्षे य उपद्यविष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् (य०सं०३३।५३) ।

आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
येह्यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥

---

( १ ) "आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ।
यवैरन्ववकीर्याथ" इति याज्ञवल्क्येन यवैः भूमेः प्रादक्षिण्येनावकिरणमुपदिष्टम् । एवं हस्तार्घपात्रे वैश्वदेविके यवानां प्रक्षेपोपि "भाजने सपवित्रके। शन्नोदेव्या पयः क्षिप्त्वा यवोसीति यवांस्तथा" ॥ २३० ॥ इति तेन विहितः । परन्तु कर्कायैतन्न रोचते । कात्यायनेनानुपदेशात् । अतस्तन्मते दैविकेऽपि तिलविकिरणमेवेति बोध्यम् ।

इति जपेत् । ततः पितृमण्डलं गच्छेत् प्रेतस्यावाहनाभावात् ।

अपसव्येन तिलान् गृहीत्वा अद्येहामुकगोत्रान् प्रेत-पितृपितामहप्रपितामहानमुकामुकशर्मणः वसुरुद्रादित्यस्वरूपान् ( अमुकगोत्राः प्रेताश्वश्रूवृद्धश्वश्रूवृद्धतरश्वश्रूः अमुकामुकदेवीः वसुरुद्रादित्यस्वरूपाः) (१)पितॄन् सपिण्डीकरणश्राद्धेऽहमावाहयिष्ये इति पृष्ट्वा आवाहयेत्सनुज्ञातः—

ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवे (य०सं०१९।७०) इति आवाह्य तिलान् विकीर्य अञ्जलिं बध्वा—

ॐआयन्तु नः पितरः सोम्यासो अग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ इति (य०सं०१९।५८) जपेत् ।

सव्येन विश्वदेवमण्डलं गत्वा विश्वेभ्योदेवेभ्यो हस्तार्घस्थापनम् । भूमौ चन्दनेन चतुष्कोणं विलिख्य तन्मध्ये शङ्खचक्रे लिखित्वा आसनार्थं कुशपत्रद्वयं संस्थाप्य तदुपरि पर्णपुटादिरूपं पात्रं संस्थाप्य तत्र "पवित्रे स्थो वैष्णव्यौ" इति द्विदलं पवित्रं निक्षिप्य शन्नोदेवीरिति जलेनापूर्य यवोऽसीति यवान् गन्धपुष्पाक्षतांश्च तूष्णीं निक्षिप्य देवार्घपात्रसम्पत्तिरस्तु इति कर्ता । अस्तु सम्पत्तिरिति प्रतिवचनम् । ततः पितृमण्डले गत्वा त्रीणि पित्रर्घपा-

---

(१) पितृशब्दोऽयं सपिण्डीकरणान्तसंस्कारजन्यपितृभावापत्तिरूप प्रवृत्तिनिमित्तकः, यथा पितृभ्यो दद्यात्, पितॄनावाहयिष्ये, पितॄन् हविषे अत्तवे, आयन्तु नः पितरः,अत्र पितरोमादयध्वम्, अमीमदन्त पितरः, नमो वः पितरः, एतद्वः पितरः, तर्पयत मे पितॄन् इत्यादि । तस्य पित्रादिषु मातामहादिषु मातृभ्रातृपितृव्यादिषु च तुल्यत्वान्नोहः कुत्रापि । अतः पितॄनावाहयिष्ये इत्येव सर्वत्र प्रश्न इति कर्कभाष्ये स्पष्टम् । तदनुसारेण अस्माभिरपि मातृपक्षे नोहः प्रदर्शित इति बोध्यम् ।

त्राणि यवस्थाने तिलोऽसीतितिलप्रक्षेपपूर्वकं प्राक् संस्थानि पूर्ववत् स्थापयित्वा 'पित्रर्घपात्राणि परिपूर्णानि सन्तु' इति वदेत्। सन्त्विति प्रतिवचनम्(१)। ततो वैश्वदेविकमण्डलं गत्वा वैश्वदेविकार्घपात्रस्थं पवित्रं विप्रकरे ॐनमो नारायणायेति दत्त्वा (अर्घपात्रं वामकरे कृत्वा उत्तानेन दक्षिणहस्तेनाच्छाद्य)(२)

ॐ या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः। हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शᳫं स्योनाः सुहवा भवन्तु॥ इति (का०श्रा०सू०कं०२) पठित्वा अर्घपात्रं दक्षिणेनादाय अद्येह अमुकगोत्रप्रेतपित्रादित्रयश्राद्धसम्बन्धिनः ( प्रेताश्वश्र्वादित्रयश्राद्धसंबन्धिनः ) कालकामसंज्ञका विश्वेदेवाः सपिण्डीकरणश्राद्धे एष हस्तार्घो वोऽस्तु इति अर्घ्यं दत्त्वा(३) विप्रकरस्थं पवित्रं पुनरर्घपात्रे स्थापयेत्।

---

( १ ) अत्र केचित् दैवपात्रं पूरयित्वा अनन्तरं दत्त्वा च पितृपात्रजातस्य पूरणादि कुर्वन्ति। तदयुक्तम्। कात्यायनेन पूरणदानयोः पदार्थयोः पृथगुपदेशेन पदार्थानुसमयस्यैव तेन बोधनेन काण्डानुसमये मानाभावात्। तस्मात् उभयोः समानं पूरणं ततो दानमिति कर्कः।

( २ ) ततो वामेन हस्तेन गृहीत्वा चमसान् क्रमात्।
पितृतीर्थेन तत्तोयं दक्षिणेन च पाणिना॥
दत्तदर्भोदके हस्ते विप्रेभ्यश्च पृथक् पृथक्।

इति वायुपुराणीयवचनमनुसृत्य वामहस्ते अर्घपात्रं धृत्वा 'या दिव्या' इति पठित्वा विप्रकरस्थपवित्रसहितमर्घ्यजलमुत्सृजेदिति श्राद्धतत्त्वे। (२१२)

( ३ ) एकैकस्य पित्रादेः यत्सम्बन्धि दानं तदेकैकेन पात्रेण निर्वर्तयितव्यम्। अतः पितृभ्यस्त्रीणि पात्राणि भवन्ति। विश्वेभ्यो देवेभ्यः एकमेव। केचित्तु वैश्वदेविके ब्राह्मणसंख्यया पात्राणि कुर्वन्ति। तन्न युक्तम्। देवतासम्बन्धेनैव पात्राणां श्रवणात्। तस्मात् दैविकं पात्रमेकमेव इति कर्कः। "असावेष ते अर्घ" इति कात्यायनो-

ततः प्रेतमण्डलं गत्वा अपसव्येन तूष्णीं हस्तार्घं संस्थाप्यैकशिखं पवित्रं प्रेतविप्रपाणौ दत्त्वा अद्येहामुकगोत्रामुकप्रेत (गोत्रे प्रेते) सपिण्डीकरणश्राद्धे एष हस्तार्घस्तवोपतिष्ठतामित्युच्चार्य चतुर्थांशं जलं विप्रपाणौ दत्त्वा सव्येनाचम्य पञ्चगव्येनाभिषिक्तः प्रेतार्घपात्रं गृहीत्वा पितृमण्डलं गच्छेत् । तत्र कृतापसव्यः पातितवामजानुर्दक्षिणाभिमुखस्तिलमोटकयुतं जलं गृहीत्वा अद्येहामुकगोत्रस्यामुकप्रेतस्य (गोत्रायाः प्रेतायाः) प्रेतत्वविमुक्तये पितृपदप्राप्त्यर्थं प्रेतपात्रोदकममुकगोत्राणां प्रेतपितृपितामहप्रपितामहानाममुकामुकशर्मणाम् (प्रेतापात्रोदकममुकगोत्राणां प्रेताश्वश्रूवृद्धश्वश्रूवृद्धतरश्वश्रूणाममुकामुकदेवीनाम् ) अर्घपात्रोदकैः सह संयोजयिष्ये इति पृष्ट्वा संयोजयेत्यनुज्ञातः प्रेतार्घपात्रस्थं जलं पित्रादिपात्रेषु वक्ष्यमाणप्रकारेण आसिञ्चेत् । तद्यथा प्रेतार्घपात्रं हस्ते गृहीत्वा—

(संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः ।
संसृजध्वं पूर्वेभिः पितृभिः सह ॥
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा नः सुसहासति ॥
सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सञ्जानाना उपासते ॥ )
(१)ये समानाः समनसः पितरो यमराज्ये । तेषां

---

पदेशात् असावित्यस्य देवतानामादेशपरिचायकत्वात्तत्तद्देवतापदं सम्बुद्ध्यन्तमुल्लिख्य हस्ते अर्घप्रतिपादनं कातीयैः कर्तव्यम् । न तु नमःपदं स्वाहापदं वा अर्घ्यदाने प्रयोक्तव्यम् । सूत्रानुपदेशात् ।

(१) "चतुर्थं पिण्डमुत्सृज्य त्रेधं कृत्वा पिण्डेषु निदध्यात् "संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः । संसृजध्वं पूर्वेभिः पितृभिः सह ॥ समानी वः, संवो मनांसीति"(पृ०२७७) इति काठक-

लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ ये समानाः समनसो जीवा जीवेषु मामकाः। तेषाᳪ श्रीर्मयि कल्पतामस्मिन् लोके शतᳬ समाः॥(य०सं०१९।४५-४६)

इति मन्त्रद्वयं(मन्त्रपञ्चकं)पठित्वा अमुकगोत्रामुकप्रेत अमुकगोत्रेणामुकशर्मणा पित्रा(अमुकगोत्रे अमुकप्रेते अमुकगोत्रयाऽमुकदेव्या श्वश्र्वा)सह सायुज्यं गच्छेत्युक्त्वा प्रेतार्घपात्रस्थतृतीयभागं जलं प्रेतपित्रर्घपात्रे आसिञ्चेत्।

पुनः पूर्वोक्तं मन्त्रद्वयं (मन्त्रपञ्चकं) पठित्वा अमुकगोत्रामु-

---

गृह्ये 'संसृजतु त्वा' इत्यादि 'पितृभिःसहेत्यन्तं सम्पूर्णं प्रथमं मन्त्रं निर्दिश्य "समानी व" इति "संवो मनांसि" इति च द्वौ मन्त्रौ प्रतीकमात्रेण निर्दिष्टौ। तत्र—

समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा नः सुसहासति ॥

इति ऋ० संहितायां (८।८।४९) स्पष्टमेव निर्दिष्ट उपलभ्यते। "संवो मनांसि" इति तु तत्रैव—

संगच्छध्वं संवदध्वं संवोमनांसि जानताम्।
देवा भागं यथा पूर्वे संजानाना उपासते ॥

इत्येवं निर्दिष्ट उपलभ्यते। काठकगृह्ये प्रेतपिण्डभागनिधाने विनियुक्ता एते त्रयो मन्त्राः प्राचीनपद्धतिषु अर्घ्ययोजने पिण्डयोजने च विनियुक्ता दृश्यन्ते। अस्माभिस्तु "चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितृणाम् एकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति "ये समाना" इति द्वाभ्याम् एतेनैव पिण्डो व्याख्यातः" इति (का०श्रा०सू०कं०५) कात्यायनश्राद्धकल्पसूत्रे अर्घ्योदकसंयोजने पिण्डसंयोजने च "येसमाना" इति द्वयोरेव मन्त्रयोः स्वशाखीययोः विनियोगविधानात् द्वावेव मन्त्रौ निर्दिष्टौ आवश्यकत्वात्। अतः "संसृजतु त्वा" इत्यादित्रयाणां मन्त्राणां माध्यन्दिनशाखीयानाम् अर्घ्ययोजने पिण्डयोजने च पाठो नावश्यं कर्तव्यः इति ते त्रयो मन्त्राः परशाखीयाः कोष्ठके स्थापिता इति बोध्यम्।

कप्रेत अमुकगोत्रेणामुकशर्मणा पितामहेन (अमुकगोत्रे अमुकप्रेते अमुकगोत्रयाऽमुकदेव्या वृद्धश्वश्र्वा) सह सायुज्यं गच्छेत्युक्त्वा प्रेतार्घपात्रस्थावशिष्टजलार्धं प्रेतपितामहपात्रे आसिञ्चेत् ।

पुनर्मन्त्रद्वयं ( मन्त्रपञ्चकं ) पठित्वा अमुकगोत्रामुकप्रेत अमुकगोत्रेणामुकशर्मणा प्रपितामहेन ( अमुकगोत्रे अमुकप्रेते अमुकगोत्रयाऽमुकदेव्या वृद्धतरश्वश्र्वा ) सह सायुज्यं गच्छेत्युक्त्वाऽवशिष्टं जलं प्रेतप्रपितामहार्घपात्रे आसिञ्चेत् एवं प्रेतार्घपात्रोदकं पित्राद्यर्घपात्रोदकेषु संयोज्य प्रेतपित्रर्घपात्रस्थं पवित्रम् ॐ नमो नारायणायेति पितृविप्रकरे दत्त्वा (अर्घपात्रं वामे हस्ते संस्थाप्य न्युब्जेन दक्षिणहस्तेनाच्छाद्य) "या दिव्या" इति पठित्वा पुनर्दक्षिणेन अर्घपात्रं गृहीत्वा अद्येहामुकगोत्र प्रेतपितः अमुकशर्मन् वसुस्वरूप (अमुकगोत्रे प्रेताश्वश्रु अमुकदेवि वसुस्वरूपे) सपिण्डीकरणश्राद्धे एष हस्तार्घस्तेऽस्त्विति विप्रपाणौ अर्घं दत्त्वा विप्रपाणिस्थं पवित्रं पुनरर्घपात्रे संस्थाप्य प्रेतपितामहार्घपात्रस्थं पवित्रं पूर्ववत् द्विजपाणौ दत्त्वा 'या दिव्या' इति पठित्वा अद्येह अमुकगोत्र प्रेतपितामह अमुकशर्मन् रुद्रस्वरूप ( अमुकगोत्रे प्रेतावृद्धश्वश्रु अमुकदेवि रुद्रस्वरूपे ) सपिण्डीकरणश्राद्धे एष हस्तार्घस्तेऽस्त्विति दत्त्वा पवित्रं पुनरर्घपात्रे संस्थाप्य प्रपितामहार्घपात्रस्थं पवित्रं पूर्ववत् द्विजपाणौ दत्त्वा 'या दिव्या' इति पठित्वा अमुकगोत्र प्रेतप्रपितामहामुकशर्मन्नादित्यस्वरूप ( अमुकगोत्रे प्रेतावृद्धतरश्वश्रु अमुकदेवि आदित्यस्वरूपे ) सपिण्डीकरणश्राद्धे एष हस्तार्घस्तेऽस्त्विति दत्त्वा पवित्रं पुनरर्घपात्रे संस्थापयेत्(१) ।

---

(१) केचित् द्विजहस्तधृतं पवित्रं पुनरर्घपात्रे गृह्णन्ति । तदतीव मन्दम् । दत्तस्योपादाने प्रमाणाभावात् इति गदाधरः । पिण्डपितृ०

(१)ततः प्रेतपित्रर्घपात्रे सर्वान् संस्रवान्समवनीय सव्येन--

अर्घोदकं श्रियं दद्यात्पुत्रपौत्रादिवर्धनम् ।
यस्मात्तस्माच्छित्रं मे स्यादिह लोके परत्र च ॥

मम कुले दीर्घमायुरस्तु शान्तिरस्तु पुष्टिरस्तु वृद्धिरस्तु यच्छ्रेयस्तदस्तु । 'यत्पापं रोगः शोको दुःखं दारिद्र्यं तद् दूरे प्रतिहतमस्तु' इति भूमौ जलं क्षिपेत् । अमृताभिषेकोऽस्त्विति शिरसि । इत्थाभिषिच्य अपसव्येन पितृब्राह्मणवामभागे हस्तमात्रे दूरे "शुन्धन्तां लोकाः पितृषदनाः" इति (य०सं०५।२६) भूमिं जलेनाभ्युक्ष्य "पितृषदनमसि" इति (य०सं०५।२६) तदुपरि कुशास्तम्बं निधाय तत्र "पितृभ्यः स्थानमसि" (का०श्रा०सू० कं०२) इत्यर्घपात्रं न्युब्जं स्थापयेत् । (२)तदुपरि स्वधावाचनीयांस्त्रीन् कुशान् संस्थाप्य आचारात्तत्पात्रं गन्धादिभिः पूजयेत् ।

ततो वैश्वदेविकमण्डलं गत्वा सव्येन वैश्वदेविकब्राह्मणं "नमोऽस्त्वनन्तायेति वस्त्रगन्धपुष्पादिभिः सम्पूज्य अद्येह अमु-

---

प्राङ्मुखस्य कर्तुरभिषेकस्यापि केषांचिन्मते निर्णयसिन्धौ दर्शनात् तत्र च संस्रवजलवत् पवित्रस्यापि साधनभावात् तदर्थं तदुपादाने न किंचिद्दूषणम इत्यन्ये ।

(१) गदाधरभाष्ये पुराणे विशेषा इत्युपक्रम्य—

आसिच्य प्रथमे पात्रे सर्वपात्रस्थसंस्रवान् ।
ताभिरद्भिर्मुखं सिञ्चेद्यदि पुत्रमभीप्सति ॥

इति । मत्स्यपुराणे--

पितृपात्रे प्रदायार्घं न्युब्जमुत्तरतो न्यसेत् । इति ।

अत्रोत्तरत्वं वामत्वम् । तच्च भोक्त्रपेक्षं समाचारादिति गदाधरः ।

( २ ) तस्योपरि कुशान् दत्वा प्रदद्याद्देवपूर्वकम् ।
गन्धपुष्पाणि धूपं च दीपं वस्त्रोपवीतके ॥

इति निर्णयसिन्धौ वैजवापोक्तेः स्वधावाचनीयकुशान् दत्त्वा तत्पात्रं गन्धादिभिः पूजयेत् । यावद्विसर्जनं न चालयेदिमवचनादिति नि० ।

कगोत्रप्रेतपित्रादित्रयश्राद्धसम्बन्धिनः (प्रेताश्वश्र्वादित्रयश्राद्धसम्बन्धिनः) कालकामसंज्ञका विश्वेदेवाः सपिण्डीकरणश्राद्धे विप्रार्चनविधौ इमानि गन्धाक्षतपुष्पधूपदीपनैवेद्यवासोऽलङ्करणादीनि मद्दत्तानि वः स्वाहा। विप्रार्चनविधौ सर्वं परिपूर्णमस्तु इति कर्ता। अस्तु परिपूर्णमिति प्रतिवचनम्।

ततः प्रेतमण्डलं गत्वाऽपसव्येन प्रेतब्राह्मणं वस्त्रगन्धादिभिरभ्यर्च्य अद्येहामुकगोत्रामुकप्रेत (गोत्रे प्रेते) सपिण्डीकरणश्राद्धे विप्रार्चनविधाविमानि गन्धपुष्पाक्षतवस्त्रधूपदीपभृङ्गराजादीनि मद्दत्तानि तत्रोपतिष्ठन्तामिति समर्प्य पञ्चगव्येनाभिषिक्तः पितृमण्डलं गत्वा पितृब्राह्मणं--

ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम्--इति (य०सं१९।३६) सम्पूज्य मोटकादिकमादाय अद्येहामुकगोत्राः प्रेतपितृपितामहप्रपितामहाः अमुकामुकशर्माणो (प्रेताश्वश्रूवृद्धश्वश्रूवृद्धतरश्वश्र्वः अमुकामुकदेव्यः) वसुरुद्रादित्यस्वरूपाः सपिण्डीकरणश्राद्धे विप्रार्चनविधाविमानि गन्धाक्षतपुष्पधूपदीपवासोलङ्करणादीनि यथाविभागं विभज्य वः स्वधेति समर्प्य विप्रार्चनविधेः सर्वं परिपूर्णमस्तु इति कर्ता। अस्तु परिपूर्णमिति प्रतिवचनम्।

(१)ततः सव्येनाचम्य वैश्वदेविकमण्डलं गत्वा तद्ब्राह्मणमाचाम्य प्रेतमण्डलं गत्वाऽपसव्येन प्रेतब्राह्मणमाचाम्य

(१) श्राद्धारम्भेऽवसाने च पादशौचार्चनान्तयोः।
विकिरे पिण्डदाने च षट्स्वाचमनमिष्यते॥
इति हेमाद्रौ सङ्ग्रहोक्तेः।

पितृमण्डलं गत्वा पितृब्राह्मणमाचामयेत्।

(१)सव्येन स्वेष्टदेवतायै विष्णवे नैवेद्यं समर्प्य वैश्वदेविकमण्डलं गत्वा भोजनपात्रस्थापनार्थं भस्मना (२)चतुष्कोणमण्डलं—

यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति।
एवं मण्डलभस्माङ्कः सर्वभूतानि रक्षतु॥

इति मन्त्रेण विलिख्य तदुपरि पत्रावलिं वामभागे जलं च संस्थाप्य प्रेतमण्डलं गत्वाऽपसव्येन त्रिकोणं वर्तुलं वा भस्मना विलिख्य पत्रावलिं जलं च स्थापयित्वा पञ्चगव्येनाभिषिक्तः पितृमण्डलं गत्वोक्तमन्त्रेण भस्मना वर्तुलं विलिख्य पत्रावलिं वामभागे जलं च संस्थाप्य पितृब्राह्मणसमीपे सव्येनैकं पत्रपुटादिपात्रं संस्थाप्य जलेन पूरयित्वा पात्रान्तरे घृताक्तमन्नमादाय भोब्राह्मण। युष्मदनुज्ञयाऽग्नौकरणमहं करिष्ये इति पृष्ट्वा कुरुष्वेत्यनुज्ञातः अपसव्येन—

ॐअग्नये कव्यवाहनाय स्वाहा-(य०सं०२।२९) इदमग्नये कव्यवाहनाय न मम। ॐसोमाय पितृमते स्वाहा

---

(१) विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते॥

इति स्कान्दात्।

यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम्।
तेनैव पिण्डांस्तुलसीविमिश्रानाकल्पकोटिं पितरस्तु तृप्ताः॥

इति ब्राह्माच्चेति श्रीधरस्वाम्यादयः।

(२) "दैवे चतुरस्रं पित्र्ये वृत्तं मण्डलं कृत्वा क्रमेण सयवान् सतिलांश्च दर्भान् दद्यात्" इति निर्णय० बह्वृचपरिशिष्टोक्तेः,

मण्डलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः।
गौरमृत्तिकया वापि भस्मना गोमयेन वा॥

इति ब्राह्मोक्तेश्च दैवे चतुष्कोणं पित्र्ये वर्तुलं भस्मना कार्यम्। तदलाभे वारिणाऽपि भृगुणोक्तम्। वर्णभेदेन भेदा अपि तेनोक्ताः।

(य०सं०२।२९) इदꣳ० सोमाय पितृमते न ममेति जले आहुतिद्वयं हुत्वा किञ्चित्पितृपात्रे(१) दत्त्वा किञ्चित्पिण्डार्थमवशेषयेत्

ततो वैश्वदेविकमण्डलं गत्वा सव्येन वैश्वदेविकपात्रे सोपस्करमन्नं परिविष्य परिविष्टमन्नं गायत्र्या कर्मपात्रोदकेनाभ्युक्ष्य (२)ॐमधुमधु (३)अधोमुखाभ्यां पाणिभ्यां पात्रमालभ्य जपति -

ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे ऽमृते ऽमृतं जुहोमि स्वाहा (का०श्रा०सू०कं०२) इति ।

(४)"विष्णो हव्यꣳ० रक्ष (य० सं०१।४)।

---

(१) अग्नौकरणशेषं तु पित्र्ये तु प्रतिपादयेत् ।
प्रतिपाद्य पितॄणां तु न दद्याद्वैश्वदेविके ॥

इति गदाधरभाष्ये यमोक्तेः ।

अग्न्यभावे तु विप्रस्य हस्ते हुत्वा तु दक्षिणे ।
शेषयेत्पितृविप्रार्थं पिण्डार्थं शेषयेत्ततः ॥

इति तत्रैव धर्मप्रदीपकोक्तेश्च ।

(२) अन्नं मधुमयं कृत्वा मधुवाचाऽभिमन्त्रितम् ।

इति शुद्धितत्त्वे (२२३) यमवचनात् "अद्भिरभ्युक्ष्य दद्यादालभ्य" इति तत्रैव हारीतवचनाच्चायं प्रकारो लभ्यते ।

(३) दैवेऽनुत्तानपाणिभ्यामुत्तानाभ्यां च पैतृके ।

इति श्राद्धतत्त्वे (२२१) यमवचनात् । अधोमुखस्य वामस्योपरि दक्षिणमुत्तानं कृत्वा दैविके पात्रालम्भो, दक्षिणस्याधोमुखस्योपरि वाममुत्तानं कृत्वा पैतृके पात्रालम्भ इत्यपि प्रकारान्तरमन्यत्रोक्तम् ।

(४) विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति वै क्रमात् ।

इति मिताक्षरायां (या०स्मृ०१।२३८) वृद्धमनुस्मरणात् (नि० यमस्मरणात्) सव्यापसव्याभ्यां दैवे पित्र्ये च क्रियमाणं हव्यकव्यरक्षणप्रार्थनं द्विजाङ्गुष्ठनिवेशनात् पूर्वमेव । द्विजाङ्गुष्ठनिवेशनंतु इदं विष्णुरिति वैष्णव्यैव । अन्यतरमन्त्रेणैव कात्यायनेनोपदेशात् समुच्चयाभावात् । यवतिलान्यतरविकिरणं सूत्रकारेण यद्यपि अङ्गुष्ठनिवेशनानन्तरं विहितं तथापि रक्षोनिवारणस्य ततः पूर्वमेवोचितत्वात्पद्धतिकारेण पूर्वं निर्दिष्टमिति बोध्यम् ।

अपहता असुरा रक्षाᳬसि वेदिषदः (य०सं०२।२९) इति यवान्(१) विकिरेत्।

अङ्गुष्ठग्रहणम् (अधोमुखस्य द्विजाङ्गुष्ठस्यान्नादौ निवेशनम्)—

ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाᳬसुरे (य०सं०५।१५) इदमन्नमिमा आपः इदमाज्यमिदं शाकादिकं सर्वं हव्यम्।

ततो वामेन पत्रावलिं स्पृशन् दक्षिणेन कुशयवजलान्यादाय अद्येहामुकगोत्रप्रेतपित्रादित्रयश्राद्धसम्बन्धिभ्यः (प्रेताश्वश्र्वादित्रयश्राद्धसंबन्धिभ्यः) कालकामसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः सपिण्डीकरणश्राद्धे इदमन्नं सोदकं सोपस्करं यत्परिविष्टंयत्परिवेक्ष्यमाणं ब्राह्मणतृप्तिपर्याप्तं दास्यमानमन्नं च यथाविभागं वः स्वाहा इत्युक्त्वा (२)भूमौ वामभागे जलं विसृजेत्। ॐअमृतोपस्तर-

---

(१) इदं दैविके 'अपहता' इत्यनेन यवविकिरणमनिरुद्धभट्टेनोक्तम्। कर्कगदाधरादीनां न कस्यापि संमतम्। कात्यायनेन तिलविकिरणस्यैवोक्तत्वात्। तस्य च देवानां स्वतोरक्षोघ्नत्वेनानपेक्षणादिति। वस्तुतस्तु वैश्वदेवावाहनोत्तरं तद्विकिरणवदत्रापि तदुचितमेवेति बोध्यम्।

(२) श्राद्धीयान्नस्य संकल्पो भूमावेव प्रदीयते।
हस्तेषु दीयमानं तु पितॄणां नोपतिष्ठते॥
वैश्वदेवस्य वामे तु पितृपात्रस्य दक्षिणे।
सङ्कल्पोदकदानं स्यात् नित्यश्राद्धे यथारुचि॥

इति धर्मप्रदीपोक्तेः।

अपोशानं प्रदायाथ सावित्रीं त्रिर्जपेदथ।
मधुवाता इति तृचं मध्वित्येतत् त्रिकं तथा॥
सङ्कल्प्य पितृदेवेभ्यः सावित्रीमधुमज्जपः।
श्राद्धं निवेद्याऽपोशानं जुषप्रैषोऽथ भोजनम्॥

इत्यादिकं निर्णयसिन्धौ।

णमसि स्वाहेति सकृदपो दद्यात् । (१)ततो यवकुशमादाय "ॐ ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ। अप्सु क्षितौ महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम्" ( य०सं०७।१९ ) इति पठित्वा 'इदं नमो देवेभ्य' इति यवकुशमुत्सृजेत् । यथासुखेन जुषध्वम् इति प्रार्थयेत् । जुषामहइति प्रतिवचनम् ।

ततः प्रेतमण्डलं गत्वा प्रेतब्राह्मणपत्रावल्यामन्नं परिविष्य अपसव्येन तिलान् विकीर्य हस्ते कुशातिलजलान्यादाय अद्येहामुकगोत्रायामुकप्रेताय ( गोत्रायै प्रेतायै ) सपिण्डीकरणश्राद्धे इदमन्नं सोदकं सोपस्करं यत्परिविष्टं तत्ते उपतिष्ठतामिति जलादिकं दक्षिणभागे भूमावुत्सृजेत् ।

ततःसव्येनाचम्य पञ्चगव्येनाभिषिक्तःपितृमण्डलं गत्वा पत्रावल्यां सोपस्करमन्नं परिविष्य गायत्र्याभ्युक्ष्य अपसव्येन उत्तानाभ्यां पाणिभ्यां मधुमधुइति पात्रमालभ्य जपति—

ॐपृथ्वी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि स्वाहा-इति । विष्णो कव्यर्ठ रक्ष । "अपहता असुरा रक्षाᳪंसि वेदिषदः" इति तिलान् विकीर्य ॐइदं विष्णुरिति अङ्गुष्ठग्रहणम् -इदमन्नमिमा आपः इदमाज्यमिदं शाकादिकं सर्वं कव्यम् ।

ततो वामेन पत्रावलिं स्पृशन् दक्षिणेन जलमोटकादिकमादाय अद्येहामुकगोत्रेभ्यः प्रेतपितृपितामहप्रपितामहेभ्योऽमुकामुकशर्मभ्यो वसुरुद्रादित्यस्वरूपेभ्यः (अमुकगोत्राभ्यः प्रेताश्वश्रूवृद्धश्वश्रूवृद्ध-

---

( १ ) "ये देवास" इमं दैवे पित्र्ये "येचेह" वै पठेत् ।
मन्त्रान्ते तु ततो ब्रूयादमृतं भुज्यतामिति ॥
इति मिताक्षराटीकायां कात्यायनोक्तेः ( ५२२ ) ।

तरश्वश्रूभ्योऽमुकामुकदेवीभ्यो वसुरुद्रादित्यस्वरूपाभ्यः) सपिण्डीकरणश्राद्धे इदमन्नं सोदकं सोपस्करं यत्परिविष्टं यत्परिवेक्ष्यमाणं ब्राह्मणस्य तृप्तिपर्याप्तं दास्यमानमन्नं च यथाविभागं वः स्वधा इति भूमौ दक्षिणभागे जलादिकमुत्सृजेत् । ततः "ॐअमृतोपस्तरणमसि स्वाहेति पितृब्राह्मणाय सकृदपो दत्त्वा तिलमोटकमादाय —

ॐये चेह पितरो ये च नेह याँश्च विद्म याँ२॥उच न प्रविद्म । त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञꣳ सुकृतं जुषस्व–इति (य०सं०१९।६७) पठित्वा "स्वधा पितृभ्य" इति तिलमोटकं त्यक्त्वा यथासुखेन जुषध्वमिति प्रार्थयेत् । जुषामहे इति प्रतिवचनम् । विप्रेष्वश्नत्सु सव्येन प्रणवव्याहृतिपूर्वां गायत्रीं जपित्वा—

ॐमधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँ२॥अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ ( य०सं०१३।२७–२८–२९ ) ॐ मधुमधुमधु इति पठेत् । सति सम्भवे (१)पितृसूक्तादि च पठेत् । ततस्तुलसीशर्करागव्यदुग्धाज्ययुतमन्नं ताम्रादिपात्रे कृत्वा कर्मपात्रोदकमग्नौकरणशेषं च संमिश्र्यापसव्येन त्रीन् पिण्डान् निर्माय लेपभागं च निर्माय

---

(१) महालये गयाश्राद्धे प्रीतिश्राद्धे( आमश्राद्धे ) तथैव च ।
सपिण्डीकरणश्राद्धे न जपेत् पितृसूक्तकम् ॥
इति निषेधात् सपिण्डीकरणश्राद्धे पितृसूक्तपाठो न कार्य इति बहवः ।

शेषेण (१)नैर्ऋत्यां दिशि विकिरदानम्। एकं कुशं भूमौ संस्थाप्य द्विगुणकुशमादाय--

असंस्कृतप्रमीतानां त्यागिनां कुलभागिनाम् ।
उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् ॥

इत्यासनं दत्त्वा तिलमोटकजलयुतमन्नमादाय–

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥
येषां न पचते माता येषां न पचते पिता ।
उच्छिष्टं ये च काङ्क्षन्ति तेभ्योऽन्नं दत्तमक्षयम् ॥

इत्यन्नं विकीर्य आचाराद्गन्धपुष्पाक्षतैः पूजयेत् । ततो हस्तौ पादौ प्रक्षाल्य सव्येनाचम्य श्राद्धदेशं गत्वा (२)पुनराचामेत् । ततः(३) पितृपूर्वं चुलुकदानं कृत्वा गायत्रीं "मधुव्वाता"इत्यादि-ऋक्त्रयं च पूर्ववज्जपेत् । ततः प्रेतमण्डलं गत्वाऽपसव्येन ब्राह्मणं स्वदितमिति पृच्छेत् । सुस्वदितमिति प्रतिव० । ततः पञ्चग-व्येनाभिषिक्तो वैश्वदेविकं मण्डलं पितृमण्डलं च गत्वा सव्येन भोब्राह्मणा अस्मिन् पाकमध्ये यत्किञ्चिद्रोचते तद् गृह्यताम् "तृप्ताः स्थ" इति ब्रूयात् । 'तृप्ताः स्मः' इति प्रत्युक्तिः ।

---

(१) यजमानस्य दासादीनुद्दिश्य द्विजसत्तम ।
तस्मादन्नं त्यजेद् भूमौ वामभागेतु पैतृके ॥

इति नि०श्राद्धकारिकायां पितृवामभागे विधानात् नैर्ऋत्यां फलति ।

(२) ततः प्रक्षाल्य हस्तौ च द्विराचम्य हरिं स्मरेत् ।
इति नि० ब्राह्मोक्तेः ।

(३) उदङ्मुखेष्वाचमनमादौ दद्यात् ततः प्राङ्मुखेषु" इति नि० विष्णुस्मृतेः,

विश्वेदेवनिविष्टानां चरमं हस्तधावनम् ।

इति शातातपस्मृतेश्च चुलुकदानस्य पितृपूर्वत्वम् ।

ततः प्रेतमण्डलं गत्वा अपसव्येन प्रेतविप्रोच्छिष्टसन्निधौ सैकतीं वेदिं निर्माय आसनार्थे कुशानास्तीर्य तिलमोटकजलमादाय अद्येहामुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) सपिण्डीकरणश्राद्धे पिण्डावनेजनं तवोपतिष्ठतामिति । ततो मधुतिलघृतादिमिश्रमन्नमादाय समाचारादीर्घवर्तुलं पिण्डं निर्माय मध्वन्नबलिं च निर्माय वामं जानु निपात्य सतिलकुशजलयुतं पिण्डमादाय अद्येहामुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) सपिण्डीकरणश्राद्धे एष पिण्डो मद्दत्तस्तवोपतिष्ठताम् इति पिण्डं दत्त्वा(१) तिलजलकुशमादाय अद्येहामुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) सपिण्डीकरणश्राद्धे पिण्डे प्रत्यवनेजनं तवोपतिष्ठताम् इति प्रत्यवनेजनं दत्त्वा पिण्डम् 'एष गन्धस्तवोपतिष्ठताम्' इत्यादिप्रयोगेण गन्धादिभिरभ्यर्च्य मध्वन्नबलिं च समर्प्य जलादिकमादाय अद्येहामुकगोत्रामुकप्रेत ( गोत्रे प्रेते ) सपिण्डीकरणश्राद्धे इमानि गन्धाक्षतभृङ्गराजपत्रोर्णासूत्रवासोद्रव्यादीनि मद्दत्तानि तवोप० । अद्येह अमुकगोत्रस्य अमुकप्रेतस्य ( गोत्रायाः

(१) अत्र यद्यपि "प्रेताय पिण्डमेकं तूष्णीं निरुप्य त्रीन् पितृभ्यः पार्वणवद्दत्त्वा प्रेतपिण्डं त्रिधा विभज्य पितृपिण्डेषु त्रिष्वादधाति मधुवाता इति तिसृभिः "संगच्छध्वम्" इति द्वाभ्यामनुमन्त्र्य शेषं पार्वणवत् कुर्यात् स्वस्तीति वाचयित्वा विसर्जयेत्" इति आश्वलायनगृह्यपरिशिष्टे प्रेताय पिण्डदानं विधाय अनन्तरं पितृभ्यः पिण्डदानं विधाय अनन्तरं प्रेतपिण्डस्य त्रिधाविभागपूर्वकं पितृपिण्डेषु आधानं विहितं, न तु प्रेतपिण्डे प्रत्यवनेजनपूजनादिकस्य कालो निर्दिष्टः, तथापि गारुडादौ विहितस्य पिण्डपूजनादेः कालाकाङ्क्षायामन्यत्र दृष्टस्य पिण्डदानानन्तरकालस्य प्रत्यवनेजनादावत्राप्याश्रयणं युक्तम् । एवं च परिशिष्टे पिण्डदानं तदुत्तराङ्गसर्वकर्मोपलक्षणमिति प्रत्यवनेजनादिकं दक्षिणादानान्तं सर्वमत्र प्रेतकर्म निर्दिष्टम् इति बोध्यम् ।

प्रेतायाः ) सपिण्डीकरणश्राद्धे इदमन्नोदकादि यद्दत्तं तत्ते उपतिष्ठताम् । सकुशजलदक्षिणां हस्ते गृहीत्वा अद्येहामुकगोत्रस्यामुकप्रेतस्य ( गोत्रायाः प्रेतायाः ) प्रेतत्वविमुक्त्यर्थं कृतस्य सपिण्डीकरणान्तर्गतैकोद्दिष्टश्राद्धस्य साङ्गतासिद्ध्ये इदं रजतं तन्निष्क्रयद्रव्यं वा ब्राह्मणाय यद्दीयते तत्तवोपति० । इति दक्षिणां दत्त्वा सव्येनाचम्य प्रेतपिण्डं गृहीत्वा पञ्चगव्येनाभिषिक्तः पितृमण्डलं गच्छेत् ।

ततः प्रेतपिण्डं शुचिस्थले पत्रावल्यां निधाय प्रेतपित्रादिमण्डले विप्रोच्छिष्टसन्निधौ किञ्चिदवकाशं त्यक्त्वा अपसव्येन सैकतीं वेदिं कल्पयित्वा गोमयोदकेनोपलिप्य ॐ अपहता असुरा रक्षाᳬसि वेदिषदः इति (य०सं०२।२९) रेखां कृत्वा—

ॐ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ (य०सं०२।३०)

इत्युल्मुकं प्रदक्षिणं भ्रमयित्वोदकं स्पृष्ट्वाऽवनेजनम् । सतिलजलमोटकमादाय अद्येहामुकगोत्र प्रेतपितः अमुकशर्मन् वसुस्वरूप ( अमुकगोत्रे प्रेताश्वश्रु अमुकदेवि वसुस्वरूपे ) सपिण्डीकरणश्राद्धे पिण्डासने अवनेनिक्ष्व । अद्येहामुकगोत्र प्रेतपितामहामुकशर्मन् रुद्रस्वरूप ( अमुकगोत्रे प्रेतावृद्धश्वश्रु अमुकदेवि रुद्रस्वरूपे ) सपिण्डीकरणश्राद्धे पिण्डासने अवनेनिक्ष्व । अद्येहामुकगोत्र प्रेतप्रपितामहामुकशर्मन्नादित्यस्वरूप ( अमुकगोत्रे प्रेतावृद्धतरश्वश्रु अमुकदेवि आदित्यस्वरूपे ) सपिण्डीकरणश्राद्धे पिण्डासने अवनेनिक्ष्व इत्यवनेजनं दत्त्वोपमूललूनकुशानास्तीर्य सव्येन ईशानादिपदस्मरणम्—

ईशानविष्णुकमलासनकार्तिकेय-
वह्नित्रयार्करजनीशगणेश्वराणाम् ।
क्रौञ्चामरेज्यकलशोद्भवकाश्यपानां
पादान्नमामि शिरसा पितृमुक्तिहेतोः—इति ॥

ततो भोब्राह्मणा युष्मदनुज्ञया पिण्डप्रदानमहं करिष्य इति पृष्ट्वा कुरुष्वेत्यनुज्ञातः गङ्गागयाकुरुक्षेत्रादिपुण्यतीर्थानि स्मृत्वाऽपसव्येन वामं जानु निपात्य पिण्डे पितृस्वरूपं ध्यात्वा सतिलजलमोदकयुतं पिण्डमादाय अद्येहामुकगोत्र प्रेतापितः अमुकशर्मन् वसुस्वरूप ( अमुकगोत्रे प्रेताश्वश्रु अमुकदेवि वसुस्वरूपे ) सपिण्डीकरणश्राद्धे एषोऽन्नपिण्डोऽमृतस्वरूपो मद्दत्तस्तेऽस्तु । इति रेखायां पिण्डं दत्त्वा--

इयं भूमिर्गयातुल्या इदमुदकं गाङ्गं ( गङ्गाजलतुल्यम् )

अमुकगोत्राय प्रेतपित्रेऽमुकशर्मणे वसुस्वरूपाय ( अमुकगोत्रायै प्रेताश्वश्र्वै अमुकदेव्यै वसुस्वरूपायै ) इति पिण्डे जलधारां दत्त्वा पूर्ववत् द्वितीयं पिण्डं गृहीत्वा अद्येहामुकगोत्र प्रेतपितामहामुकशर्मन् रुद्रस्वरूप ( अमुकगोत्रे प्रेतावृद्धश्वश्रु अमुकदेवि रुद्रस्वरूपे ) सपिण्डीकरणश्राद्धे एषोऽन्नपिण्डोऽमृतस्वरूपो मद्दत्तस्तेऽस्तु इति दत्त्वा इयं भूमिर्गया० ।

अमुकगोत्राय प्रेतपितामहायामुकशर्मणे रुद्रस्वरूपाय ( अमुकगोत्रायै प्रेतावृद्धश्वश्र्वै अमुकदेव्यै रुद्रस्वरूपायै इति जलधा० द० पूर्ववत् तृतीयं पिण्डं गृहीत्वा अद्येहामुकगोत्र प्रेतप्रपितामहामुकशर्मन्नादित्यस्वरूप ( अमुकगोत्रे प्रेतावृद्धतरश्वश्रु अमुकदेवि आदित्यस्वरूपे) सपिण्डीकरणश्राद्धे एषोऽन्नपिण्डोऽमृतस्वरूपो मद्दत्तस्तेऽस्तु इति दत्त्वा इयं भूमि० अमुकगोत्राय प्रेतप्रपितामहायामुकशर्मणे आदित्यस्वरूपाय ( अमुकगोत्रायै

प्रेतावृद्धतरश्वश्र्वै अमुकदेव्यै आदित्यस्वरूपायै ) इति जलधारां दद्यात् ।

ततो लेपभागिनामयं भागोऽस्त्विति लेपभागं दत्त्वा सव्येनाचम्यापसव्येन हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा--

(१)ॐअत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ( य०सं०२।३१ ) इति जपित्वा श्वासं नियमयन्नप्रादक्षिण्येनोदङ्मुखो भूत्वा श्वासविमोके प्रदक्षिणमावृत्य दक्षिणाभिमुखो भूत्वा ॐअमीमदन्त पितरो यथाभागमावृषायिषत ( य०सं०२।३१ )इति जपेत् । ततो गन्धपुष्पाक्षतान् पिण्डोपरि निक्षिपेत् ।

(२)ततः प्रत्यवनेजनम् । सतिलमोदकं गृहीत्वा अद्येहामु-

---

(१) "तत्र जपति "अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्" इति । अथ पराङ् पर्यावर्तते । आतमितोरासीतेत्याहुः । अथोपपर्यावृत्य जपति "अमीमदन्त पितरो यथाभागमावृषा यिषत" इति । अथावनेजयति । अथ नीविमुद्वृह्य नमस्करोति पितृदेवत्या वै नीविः । षट्कृत्वो नमस्करोति षड्वा ऋतवः । ऋतवः पितरः । गृहान्नः पितरो दत्तेत्याशीः। अथावजिघ्रति प्रत्यवधाय पिण्डान्" इति (श०ब्रा०कां०२ ।अ०४ब्रा०२।कं०२०)ब्राह्मणमनुसृत्य अयं प्रकारोऽभिहितः । तेन सव्यापसव्यादिप्रकारो हेयः । अप्रादक्षिण्यप्रादक्षिण्ययोरेव ब्राह्मणवाक्यतो लाभात् । तथैव भाष्यकारेण व्याख्यानाच्चेति बोध्यम् । तत्र पिण्डोपरि गन्धपुष्पादिप्रक्षेपणं समाचारसिद्धम् ।

(२) बहुषु पद्धतिपुस्तकेषु अस्मिन्नेवावसरे प्रेतपिण्डस्य त्रेधाविभागं कृत्वा प्रेतपित्रादिपिण्डेषु योजनमुपन्यस्यानन्तरं कर्तुः पितामहत्वादिना प्रेतपित्रादीनुल्लिख्य प्रत्यवनेजनादयः पार्वणधर्मा निर्दिष्टाः । परं तु एवमनुष्ठाने पिण्डयोजनात्पूर्वं प्रेतसम्बन्धित्वेन तेषां सङ्कल्पवाक्ये उल्लेखः, अनन्तरं प्रेतपदप्रयोगाभावात् कर्तुः सम्बन्धित्वेनेति वैषम्यं स्यात् । न च पूर्वमपि कर्तुः पितामहत्वा-

कगोत्र प्रेतपितरमुकशर्मन् वसुस्वरूप ( अमुकगोत्रे प्रेताश्वश्रु अमुकदेवि वसुस्वरूपे ) सपिण्डीकरणश्राद्धे पिण्डे प्रत्यवनेनिक्ष्व। अद्येहामुकगोत्र प्रेतपितामहामुकशर्मन् रुद्रस्वरूप ( अमुकगोत्रे प्रेतावृद्धश्वश्रु अमुकदेवि रुद्रस्वरूपे ) सपिण्डीकरणश्राद्धे पिण्डे

---

दिनैवोल्लेखोऽस्त्विति वाच्यम्। ततः पूर्वं प्रेतसम्बन्धित्वेनोल्लेखस्यैव समाचारसिद्धत्वात्। किञ्च यथा प्रेतपिण्डदानानन्तरं प्रेतपिण्डे प्रत्यवनेजनपूजनादिकं सर्वमेवोत्तराङ्गकलापमनुष्ठाय पिण्डयोजनमनुष्ठीयते, तथा प्रेतपित्रादिभ्यः पिण्डदानानन्तरं प्रत्यवनेजनपिण्डपूजनादिकं प्राकृतपदार्थजातं पूर्वमनुष्ठायैव पिण्डयोजनमनुष्ठेयम्। प्राकृतानाम् उभयाकाङ्क्षया शीघ्रोपस्थिततत्वात्। वैकृतस्यान्यतराकाङ्क्षया विलम्बोपस्थिततत्वात्। अतएव "प्राकृतं च विकृतौ" इति (का० श्रौ०१।५।४) कात्यायनसूत्रे विकृतौ ल्यपानिर्दिष्टप्राकृतवैकृतयोर्मध्ये प्राकृतमेव कार्यम्, यथा "आसाद्याज्यानि दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन् सोमं निदधाति" (का० श्रौ०८।७।१७) इत्यत्र आज्यासादनानन्तरं दक्षिणे शकटे सोमनिधानं निर्दिष्टमपि आज्यासादनानन्तरं प्रकृतौ निर्दिष्टं हविःसंमर्शनादिकं कृत्वैवानुष्ठीयते, "आसाद्य हवीꣳषि संमृश्याप उपस्पृश्य राजानमादाय प्रपद्यते" इतिश्रुत्यनुग्रहस्यापि तत्र दर्शनात् इति कर्काचार्यैर्निरूपितम्। इत्थं च अक्षय्योदकदानान्ताः प्रत्यवनेजनादयः सर्वे प्राकृताः पदार्थाः पूर्वमनुष्ठेयाः, अनन्तरं वैकृतं पिण्डविभागपूर्वकं योजनम, अनन्तरं दक्षिणाविसर्गादिकमिति। अतएव विष्णुस्मृतौ (अ०२०-१५।१६। १७) "उच्छिष्टसन्निधौ पिण्डचतुष्टयं कुर्यात् ॥१५॥ ब्राह्मणांश्च स्वाचान्तान्दत्तदक्षिणाँश्चानुव्रज्य विसर्जयेत् ॥१६॥ ततः प्रेतपिण्डं पाद्यपात्रोदकवत् पिण्डत्रये निदध्यात्" ॥१७॥ इति अन्ते एव पिण्डयोजनं निर्दिष्टम्। अस्माभिस्तु आश्वलायनगृह्यपरिशिष्टमनुसृत्य स्वस्तिस्वधावाचनादिकं पिण्डयोजनोत्तरं निर्दिष्टम्। तेन प्रत्यवनेजनाद्यक्षय्योदकदानान्तप्राकृतपदार्थानां पिण्डयोजनात्पूर्वमनुष्ठाने विष्णुस्मृत्येकवाक्यताऽस्त्येवेति अक्षय्योदकदानान्ताः प्राकृताः पदार्थाः पिण्डयोजनात् पूर्वमेवानुष्ठेया इति बोध्यम्।

प्रत्यवनेनिक्ष्व। अद्येहामुकगोत्र प्रेतप्रपितामहामुकशर्मन् आदित्यस्वरूप (अमुकगोत्रे प्रेतावृद्धतरश्वश्रु अमुकदेवि आदित्यस्वरूपे) सपिण्डीकरणश्राद्धे पिण्डे०। इति प्रत्यवनेजनं दत्त्वा किञ्चिन्नीविविस्रंसनम्(१)। ततः अक्षतैः "ॐनमो वः पितरो रसाय ॐनमो वः पितरः शोषाय ॐनमो वः पितरो जीवाय ॐनमो वः पितरः स्वधायै ॐनमो वः पितरो घोराय ॐनमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वः" इति (य०सं०२।३२) नमस्कारपूर्वकं षडञ्जलिकरणम्। "ॐगृहान्नः पितरो दत्त, सतो वः पितरो देष्म" (य०सं०२।३२) इत्याशीःप्रार्थनम्। "एतद्वः पितरो वास" इति (य०सं०२।३२) प्रतिपिण्डं त्रिगुणितसूत्रदानम्। ततः कर्मपात्रोदकेन ॐऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधा स्थ तर्पयत मे पितॄन् (य०सं०२।३४)-इत्यनेनोर्जकरणम्(२)।

ततः सव्येन देवताभ्य इति त्रिर्जपः। भोब्राह्मणा युष्मदनुज्ञया पिण्डार्चनमहं करिष्ये इति प्रार्थ्य कुरुष्वेत्यनुज्ञातोऽपसव्यं विधाय "पितृभ्यः स्वधायिभ्य" इति मन्त्रेण पिण्डान् गन्धाक्षतपुष्पादिभिः सम्पूज्य वस्त्रादिकमपि निवेश्य हस्ते मोटकादिकमादाय अद्येहामुकगोत्राः प्रेतपितृपितामहप्रपितामहाः

---

(१) प्रत्यवनेजनानन्तरं नीवीविस्रंसनस्य तदनन्तरं षड्ऋतुनमस्कारस्य च पूर्वनिर्दिष्टब्राह्मणवाक्यतो लाभात्।

(२) सूत्रदानानन्तरम् "ऊर्जमित्यपो निषिञ्चति" इति (का० श्रौ०४।१।१९) कात्यायनेन पिण्डपितृयज्ञे जलेनोर्जकरणविधानात् तदत्र निर्दिश्यते। "स्वधावाचनीयेष्वपो निषिञ्चत्यूर्जमिति" इति श्राद्धकल्पे तृतीयकण्डिकायां विहितं तु उत्तरत्र दुग्धेन निर्देक्ष्यते इति बोध्यम्।

अमुकामुकशर्माणो वसुरुद्रादित्यस्वरूपाः ( प्रेताश्वश्रूवृद्धश्वश्रूवृद्धतरश्वश्र्वः अमुकामुकदेव्यो वसुरुद्रादित्यस्वरूपाः) सपिण्डीकरणश्राद्धे पिण्डार्चनविधाविमानि गन्धाक्षतपुष्पतुलसीदलधूपदीपनैवेद्यताम्बूलवासोऽलङ्करणादीनि यथाविभागं वः स्वधा इति निवेदयेत् । पिण्डार्चनविधौ सर्वं परिपूर्णमस्तु इति प्रार्थयेत् । अस्तु परिपूर्णमिति प्रति० ।

ततः सव्येनाचम्य (१)पिण्डाग्रभूमौ 'सुप्रोक्षितमस्त्विति जलं क्षिप्त्वा वैश्वदेविकब्राह्मणस्य पितृब्राह्मणस्य च करे ॐशिवा आपः सन्तु--

ॐअपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।
ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु मे ॥

इति जलं दद्यात् । सन्तु शिवा इति प्रतिवचनम् ।

ॐसौमनस्यमस्तु--

ॐलक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।
लक्ष्मीर्वसति वै गोष्ठे सौमनस्यं ददातु मे ॥

इति पूर्ववदुभयत्र ब्राह्मणकरयोः पुष्पं क्षिपेत् । अस्तु

---

( १ ) अयं प्रकार उक्तो गदाधरभाष्ये छन्दोगपरिशिष्टे—

अथात्र भूमिमासिञ्चेत् सुप्रोक्षितमस्तु इति ।
शिवा आपः सन्तु इति युग्मानेवोदकेनच ॥
सौमनस्यमस्तु इति पुष्पदानमनन्तरम् ।
अक्षतं चारिष्टं चास्त्वित्यक्षतान् प्रतिपादयेत् ॥
अक्षय्योदकदानं तु अर्घ्यदानवदिष्यते ।
षष्ठ्यैव नियतं कुर्यान्न चतुर्थ्यां कदाचन ॥ इति ।

अत्र पित्राद्युल्लेखाभावात् जलादिदानं देवे पित्र्ये च कार्यम् । तच्च सव्येनैव ।

ततः पुष्पाणि सव्येन उदकानि पृथक्पृथक् ।

इति शातातपस्मरणात् ।

सौमनस्यमिति प्रतिवचनम् । ॐअक्षतं चारिष्टं चास्तु--

अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिश्च मे ।
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥

इति पूर्ववदक्षतान् दद्यात् । अस्त्वक्षतमरिष्टं चेति प्रतिवचनम् । ततः कर्मपात्रोदकेन मूर्धाभिषेकः । मम कुले दीर्घमायुरस्तु शान्तिरस्तु पुष्टिरस्तु वृद्धिरस्तु यच्छ्रेयस्तदस्तु । 'यत्पापं रोगः शोको दुःखं दारिद्र्यं तद् दूरे प्रतिहतमस्त्विति भूमौ । अमृताभिषेकोऽस्त्विति शिरसि ।

(१)ततोऽपसव्येनाक्षय्योदकदानम् । मोटकजलमादाय अद्येहामुकगोत्रस्य प्रेतपितुरमुकशर्मणो वसुस्वरूपस्य (अमुकगोत्रायाः प्रेताश्वश्र्वाः अमुकदेव्या वसुस्वरूपायाः) सपिण्डीकरणश्राद्धे इदमन्नोदकादि यद्दत्तं तदक्षय्यमस्तु इति ब्राह्मणहस्ते मोटकं पिण्डोपरि जलं दद्यात् । अस्त्वक्षय्यमिति प्रतिव० । एवम् अद्येहामुकगोत्रस्य प्रेतपितामहस्यामुकशर्मणो रुद्रस्वरूपस्य (अमुकगोत्रायाः प्रेतावृद्धश्वश्र्वाः अमुकदेव्या रुद्रस्वरूपायाः) सपिण्डीकरणश्राद्धे इदमन्नोदका० । पूर्ववत् दद्यात् । तथा अद्येहामुकगोत्रस्य प्रेतप्रपितामहस्यामुकशर्मण आदित्यस्वरूपस्य (अमुकगोत्रायाः प्रेतावृद्धतरश्वश्र्वा अमुकदेव्या आदित्यस्वरूपायाः) सपिण्डीकर० इत्यादि पूर्ववत् ।

ततः सव्येनाशीर्ग्रहणम् । ॐअघोराः पितरः सन्तु । सन्तु इति प्रतिव० । गोत्रं नो वर्धताम् । वर्धतामितिप्र० । दातारो नोऽभिवर्धन्ताम् । वर्धन्ताम् इति प्र० । वेदा वर्धन्ताम् । वर्धन्तामि० प्र० । सन्ततिर्वर्धताम् । वर्धताम् इति प्र० । श्रद्धा च

---

(१) अक्षय्योदकदानं पिण्ड एव औचित्यात् । दैवस्य स्वत एव रक्षोघ्नत्वादिति कर्कः ।

नो व्यगमत् । मागात् इति प्र० । बहुदेयं च नोऽस्तु । अस्तु इति प्र० । अन्नं च नो बहु भवेत् । भवतु इति प्र० । अतिथींश्च लभेमहि । लभध्वम् इति प्र० । याचितारश्च नः सन्तु । सन्तु इति प्र० । मास्म याचिष्म कञ्चन । मायाचेथाः (मायाचध्वम्) इति प्र० । एता एवाशिषः सत्याः सन्तु । सन्तु ।

ततोऽपसव्यं कृत्वा प्रेतपिण्डं गङ्गाजलेन संस्नाप्य(१)सुवर्णशलाकया रजतशलाकया वा त्रिधा विभज्य वासुदेवं स्मरन् प्रेतपिण्डप्रथमशकलं दक्षिणकरेणादाय अन्वारब्धेन सव्यपाणिना प्रेतपितृपिण्डं चादाय वामं जानु निपात्य दक्षिणाभिमुखो गङ्गागयाकुरुक्षेत्रादीन्संस्मृत्य गणेशविष्णुशिवदुर्गासूर्यगार्हपत्यादीन्नमस्कृत्य अमुकगोत्रस्यामुकप्रेतस्य (अमुकगोत्रायाः अमुकप्रेतायाः) प्रेतत्वविमुक्तये उत्तमलोकप्राप्त्यर्थं प्रेतपिण्डप्रथमशकलम् अमुकशर्मणः प्रेतपितुः ( अमुकदेव्याः प्रेताश्वश्र्वाः ) पिण्डेन सह संयोजयिष्ये । संयोजयेत्यनुज्ञातः—

( संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः ।
संसृजध्वं पूर्वेभिः पितृभिः सह ॥
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा नः सुसहासति ॥
सङ्गच्छध्वं सँवदध्वं सँ वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सञ्जानाना उपासते ॥ )
ये समानाः समनसः पितरो यमराज्ये । तेषां

---

( १ ) प्रेतपिण्डं त्रिधा कृत्वा सुवर्णस्य शलाकया ।
पितामहादिपिण्डेषु मेलयेत्तं पृथक्पृथक् ॥
(१२।२९) इति गारुडे विधानात् । सुवर्णशलाकाऽभावे रजतशलाका ग्राह्या । तदभावे कुशादिरूपेति ।

लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ ये समानाः समनसो जीवा जीवेषु मामकाः । तेषाᳬं श्रीर्मयि कल्पतामस्मिन् लोके शतᳬं समाः ॥

इति मन्त्रद्वयं ( मन्त्रपञ्चकं ) पठित्वा अमुकगोत्रामुकप्रेत अमुकगोत्रेणामुकशर्मणा स्वपित्रा ( अमुकगोत्रे अमुकप्रेते अमुकगोत्रयाऽमुकदेव्या स्वश्वश्र्वा ) सह सायुज्यं गच्छेत्युक्त्वा संयोजयेत् । दधिमिश्रणेन सुवृत्तं कृत्वा पूर्वस्थाने स्थापयेत् ।

ततः पूर्वोक्तरीत्या प्रेतपिण्डमध्यमशकलं प्रेतपितामहपिण्डं चादाय अमुकगोत्रस्यामुकप्रेतस्य ( अमुकगोत्रायाः अमुकप्रेतायाः ) प्रेतत्वविमुक्तये उत्तमलोकप्राप्त्यर्थं प्रेतपिण्डमध्यमशकलम् अमुकशर्मणः प्रेतपितामहस्य ( अमुकदेव्याः प्रेतावृद्धश्वश्र्वाः ) पिण्डेन सह संयोजयिष्ये । संयोजयेत्यनुज्ञातः "ये समानाः" इति मन्त्रद्वयं (मन्त्रपञ्चकं) पठित्वा अमुकगोत्रामुकप्रेतामुकगोत्रेणामुकशर्मणा स्वपितामहेन ( अमुकगोत्रेऽमुकप्रेते अमुकगोत्रयाऽमुकदेव्या स्ववृद्धश्वश्र्वा ) सह सायुज्यं गच्छेत्युक्त्वा संयोज्य दध्ना वर्तुलीकृत्य पूर्वस्थाने स्थापयेत् ।

ततः पूर्वोक्तरीत्या प्रेतपिण्डतृतीयशकलं प्रेतप्रपितामहपिण्डं चादाय अमुकगोत्रस्यामुकप्रेतस्य (अमुकगोत्राया अमुकप्रेतायाः) प्रेतत्वविमुक्तये उत्तमलोकप्राप्त्यर्थं प्रेतपिण्डतृतीयशकलममुकगोत्रस्यामुकशर्मणः प्रेतप्रपितामहस्य ( अमुकगोत्राया अमुकदेव्याः प्रेतावृद्धतरश्वश्र्वाः ) पिण्डेन सह संयोजयिष्ये । संयोजयेत्यनुज्ञातः उक्तमन्त्रद्वय ( मन्त्रपञ्चक ) पाठान्ते अमुकगोत्रामुकप्रेतामुकगोत्रेणामुकशर्मणा स्वप्रपितामहेन (अमुकगोत्रेऽमुकप्रेते अमुकगोत्रयाऽमुकदेव्या स्ववृद्धतरश्वश्र्वा) सह सायुज्यं गच्छेत्युक्त्वा संयोज्य दध्ना वर्तुलीकृत्य पूर्वस्थाने स्थापयेत् ।

(१)ततस्तान् पिण्डान् वक्ष्यमाणमन्त्रैरभिमृशेत्—
एष वोऽनुगतः प्रेतः पितरस्तं ददामि वः ।
शिवं भवतु शेषाणां जायन्तां चिरजीविनः ॥
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा नः सुसहासति ॥
संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥ इति ।
(२)ततः पिण्डान् गन्धादिभिरभ्यर्च्य (३)स्वधावाचनीयान्

---

(१) समाप्ते संवत्सरे चत्वार्युदपात्राणि प्रयुनक्ति एकं प्रेताय त्रीणि पितृभ्यः प्रेतपात्रं पितृपात्रेष्वासिञ्चति "येसमाना" इति द्वाभ्यामेवं पिण्डः। अथाभिमृशति—

एष वोऽनुगतः प्रेतः पितरस्तं ददामि वः ।
शिवं भवतु शेषाणां जायन्तां चिरजीविनः ॥

"समानी वः" "सङ्गच्छध्वं संवदध्वम्" इति द्वाभ्याम्" इति निर्णयसिन्धौ वैजवापस्मरणात् उक्तमन्त्रैरभिमर्शनं लभ्यते इति बोध्यम् ।

(२) केचित् पिण्डयोजनानन्तरं पित्राद्युद्देशेन पुनः पिण्डदानादिकं कुर्वन्ति । तत्तुच्छम् । सपिण्डीकरणे सपिण्डीकृताद्युद्देशेन पिण्डदानादेः क्वापि गृह्ये स्मृतौ वाऽनुपलम्भेन तदुद्देशेन तत्र पिण्डदानाद्यनुष्ठाने प्रमाणाभावादित्यलम् ।

(३) अत्र "स्वधावाचनीयान् सपवित्रान् कुशानास्तीर्य" इति यत्कात्यायनेनोक्तं तत्र सपवित्रानित्यस्य साग्रानित्यर्थं इति कर्कः । "सर्वान् संस्रवान् प्रथमे पात्रे समवनीय" इत्यत्र ब्राह्मणहस्तदत्तपवित्राणां समवनयनस्य न्युब्जपात्रोपरि स्थापनस्य च अनुपदेशेन अत्र तत्पवित्रसहितानां कुशानां पिण्डसमीपे आस्तरणस्याप्राप्तत्वात् ।

न्युब्जपात्रोपरिस्थितपवित्राण्यर्घपवित्रैः सह समानीय पिण्डानां पश्चिमतो दक्षिणाग्राणि निधायेति हेमाद्रिः । एतच्च तत्रत्यपुराणाश्रितं बोध्यम् ।

कुशान् न्युब्जपात्रोपरि स्थितान् गृहीत्वा पिण्डपश्चिमतः दक्षिणाग्रान् संस्थाप्य तेष्वपो निषिञ्चेत् । सव्येन भोब्राह्मणा अस्मिन्सपिण्डीकरणश्राद्धे युष्मदनुज्ञया स्वधां वाचयिष्ये इति पृच्छेत् । ततो वाच्यतामित्यनुज्ञातः अपसव्येन अद्येह अमुकगोत्रेभ्यः पितुः पितृभ्योऽमुकशर्मभ्यो वसुस्वरूपेभ्यः ( अमुकगोत्राभ्यः मातुः श्वश्रूभ्योऽमुकदेवीभ्यो वसुस्वरूपाभ्यः) सपिण्डीकरणश्राद्धे ब्राह्मणा मधुमधु स्वधोच्यताम् इति ब्राह्मणहस्ते जलं दद्यात् । अस्तु स्वधेत्युक्ते पिण्डे मोटकं दद्यात् । ततः अद्येह अमुकगोत्रेभ्यः पितुः पितामहेभ्योऽमुकशर्मभ्यो रुद्रस्वरूपेभ्यः ( अमुकगोत्राभ्यः मातुर्वृद्धश्वश्रूभ्यो ऽमुकदेवीभ्यो रुद्रस्वरूपाभ्यः ) सपिण्डीक० इत्यादि पूर्ववत् । एवम् अद्येहामुकगोत्रेभ्यः पितुः प्रपितामहेभ्योऽमुकशर्मभ्य आदित्यस्वरूपेभ्यः ( अमुकगोत्राभ्यो मातुर्वृद्धतरश्वश्रूभ्य आदित्यस्वरूपाभ्यः ) सपिण्डीक० इत्यादि पूर्ववत् । न्युब्जम् अर्घपात्रमुत्तानं कृत्वा (समाचारात्) दुग्धेनोर्जकरणम् ।

ऊर्जं वहन्ती० इति दुग्धधारां दत्त्वा सव्येन दक्षिणासङ्कल्पः ।

देयद्रव्यं सम्प्रोक्ष्य सम्पूज्य हस्ते कुशादिकमादाय ॐ विष्णुः३ देशकालौ सङ्कीर्त्य पितुरमुकगोत्रपित्रादित्रयश्राद्धसम्बन्धिनां ( मातुः अमुकगोत्रश्वश्र्वादित्रयश्राद्धसम्बन्धिनां ) कालकामसंज्ञकानां विश्वेषां देवानां प्रीतये कृतस्य सपिण्डीकरणश्राद्धान्तर्गतवैश्वदेविककर्मणः साङ्गतासिद्ध्यर्थं साद्गुण्यार्थं च इमां सुवर्णदक्षिणां तन्निष्क्रयद्रव्यं वा ब्राह्मणाय दास्ये इति दद्यात् । ततो मोटकादिकमादायॐविष्णुः३ देशकालकीर्तनान्ते अमुकगोत्रैः पितुः पितृपितामहप्रपितामहैरमु-

कामुकशर्मभिः वसुरुद्रादित्यस्वरूपैः (मातुः श्वश्रूवृद्धश्वश्रूवृद्धतर-श्वश्रूभिरमुकामुकदेवीभिः वसुरुद्रादित्यस्वरूपाभिः) कालकामसंज्ञकविश्वेदेवपूर्वकस्य पार्वणैकोद्दिष्टात्मकस्य अमुकशर्मणः (अमुकदेव्याः) सपिण्डीकरणश्राद्धकर्मणः साङ्गतासिद्ध्यर्थं साद्गुण्यार्थं चेमां रजतदक्षिणां ब्राह्मणाय दास्ये तत्सन्न मम। इति दद्यात्।

(१)ततः स्वतिलकम्।

नित्यानुष्ठानसम्पन्नाः सर्वदा यज्ञबुद्धयः।
पितृमातृपराश्चैव सन्त्वस्मत्कुलजा नराः॥

(२)ततो विशेषपूजा—

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च।
प्रयच्छन्ति तथा राज्यं नृणां प्रीताः पितामहाः॥
आयुः पुत्रान् यशः स्वर्गं कीर्तिं पुष्टिं बलं श्रियम्।
पशून्सुखं धनं धान्यं प्राप्नुयां पितृपूजनात्॥

इति सम्पूज्य ओंस्वस्ति भवन्तो ब्रुवन्त्विति दक्षिणास्वीकारं कारयेत्(३)। ओं स्वस्तीति प्रतिव०।

---

(१) ततश्च तिलकं कुर्यान्मन्त्रेणानेन भक्तितः।
नित्यानुष्ठानसम्पन्नाः० सन्त्वस्मत्कुलजा नराः॥

इति मिताक्षराटीकायां (५३२) वृद्धयोगिस्मरणात् तिलककरणस्येति बोध्यम्।

(२) वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः॥

इत्युत्तरम् "आयुः प्रजां धनं विद्याम्" इत्यस्य (या०स्मृ०अ० १श्लो०२६९।२७०) पाठात् पितामहा इत्यनेन वसुरुद्रादित्यानां लाभात् अनेन मन्त्रेण तेषां स्मरणं कृत्वा पूजनं श्राद्धान्तेऽवश्यं कर्तव्यमभिप्रेत्य तेषां पूजनस्य विशेषपूजनत्वं निर्दिश्यते। पूजयित्वा च तान् "आयुः पुत्रान् यशः स्वर्गम्" इत्यनेन वरप्रार्थनमिति भावः।

(३) "स्वस्तीति वाचयित्वा विसर्जयेत्" इति आश्वलायनगृह्य-

(१)अपसव्येन मध्यमपिण्डमुत्थाप्य पात्रे स्थापयित्वा सव्येनावजिघ्रति । ततः पिण्डस्थाने शङ्खचक्रे लिखित्वा ॐशङ्खायनमः ॐचक्राय नमः इति पूजां विधाय तत्र दीपं संस्थाप्य गन्धाक्षतपुष्पैः षडृतून् (२)पूजयेत्–ओंवसन्ताय नमः । ओंग्रीष्माय नमः । ओंवर्षाभ्यो नमः । ओंशरदे नमः । ओंहेमन्ताय नमः । ओंशिशिराय नम इति ।

इति षडृतून् पूजयित्वा दीपस्थाने दीपः । अपसव्येन पिण्डस्थाने पिण्डः । पिण्डोपरि तर्पणं कर्मपात्रोदकेन—

यः कश्चित्पितृरूपेण तिष्ठते परमेश्वरः ।
सोऽयं श्राद्धप्रदानेन तृप्तिं लभतु शाश्वतीम् ॥
गयायां पिण्डदानेन स्वयमेको जनार्दनः ।
यं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥

---

परिशिष्टे स्वस्तीति दक्षिणास्वीकारस्य पिण्डयोजनोत्तरं निर्देशेन दक्षिणादानस्यापि तदुत्तरकालिकत्वं सिध्यति । एवं तत्सहचरितं स्वधावाचनमपि उत्तरत्रैवोचितमिति तदपि तथैव निर्दिष्टम् । स्वस्तिवाचनोत्तरकालीनानां स्वतिलकादीनां तु तदादिन्यायादेवोत्तरकालिकत्वम् । विसर्जनं तु स्पष्टमेवोत्तरत्र निर्दिष्टमिति पिण्डयोजनोत्तरकालिकाः स्वधावाचनादयः पदार्था बोध्याः ।

(१) अत्र पूर्वोक्तब्राह्मणवाक्यतः (१०४ अथावजिघ्रति प्रत्यवधाय पिण्डान्) सर्वेषां पिण्डानामुत्थापनं लभ्यते । समाचारानुरोधात्तु मध्यमपिण्डमात्रोत्थापनं निर्दिष्टमिति बोध्यम् ।

(२) श्राद्धतत्त्वे ब्रह्मपुराणे (२४१)—

पूजयित्वा तु पिण्डस्थान् पितॄंश्च प्रणमेदृतून् ।
वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमोनमः ॥
वर्षाभ्यश्च शरत्संज्ञऋतवे च नमः सदा ।
हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च ॥

इति पिण्डपूजनानन्तरं विहितमृतुपूजनमन्यत् । अन्यच्च पिण्डपितृयज्ञे विहितम् पूर्वत्र निर्दिष्टम् इति बोध्यम् ।

पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ।
यत्र यत्र स्मरिष्यामि पितॄणां दत्तमक्षयम् ॥
शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे ।
उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतम् ॥
पितुः शतगुणं पुण्यं सहस्रं मातुरुच्यते ।
भगिन्यां शतसाहस्रं सोदर्ये दत्तमक्षयम् ॥ इति ।

ततः सतिलमोटकं गृहीत्वाऽपसव्येनैव अद्य दिने उदयमारभ्यास्तपर्यन्तमामं पक्वं हिरण्यादिकं यद्दत्तं यच्च दास्ये तत्स्वर्गद्वारेऽमृतीभूय पितृभ्यस्तिष्ठतु—इत्युक्त्वा जलमुत्सृजेत् । ततः सव्येन देवताभ्य इति त्रिर्जपः ।

सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥
श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
मनसा स्वपितॄन् ध्यात्वा सपिण्डीकरणश्राद्धं विसर्जये ॥

विसर्जय इति प्रति० । इदं श्राद्धं विधिहीनं देशहीनं कालहीनं भक्तिहीनं श्रद्धाहीनं यत्कृतं तत्सुकृतमस्तु यन्न कृतं तन्नारायणस्मरणात्पितृप्रसादाद्ब्राह्मणवचनाच्च सर्वं परिपूर्णमस्तु इति पूर्णतां प्रार्थयेत् । अस्तु परिपूर्णमिति प्रति० । ततो भोजनपात्राणि चालयित्वा संचरमभ्युक्ष्य सव्येनैव अभिरम्यतामिति प्रेतब्राह्मणं विसर्जयेत्(१) । ततः प्रथमम्—

---

(१) वाजेवाजे इति प्रीतः पितृपूर्वं विसर्जनम् । इति—याज्ञवल्क्यस्मरणात् (अ०१।२४७) अन्यकार्याणां देवपूर्वत्वेऽपि विसर्जनस्य पितृपूर्वत्वम् । प्रेतकार्यस्य च सर्वस्यैव पितृकार्यतः

ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ (य०सं०३४।५६)

इति पितृब्राह्मणमुत्थाप्य विश्वेदेवब्राह्मणमुक्तेनैव मन्त्रेणोत्थाप्य कर्मपात्रं हस्ते गृहीत्वा—

ॐ आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे। आ मा गन्तां पितरामातरा चा मा सोमो अमृतत्वेन गम्यात् ॥ (य०सं०९।१९)

इति प्रदक्षिणीकुर्वन् कर्मपात्रं भ्रमयित्वा विप्रपादाभ्यां निनीय—

ॐवाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ (य०सं०९।१८)

यान्तु पितृगणाः सर्वे यतः स्थानादुपागताः।
सर्वे ते हृष्टमनसः सर्वान् कामान् ददन्तु मे ॥

---

पूर्वभावित्वेन अन्ते तदीयब्राह्मणविसर्जनस्यापि पूर्वभावित्वं युक्तमेवेति बोध्यम्।

सव्येनैव चैतद्भवति—

सूक्तस्तोत्रजपं त्यक्त्वा पिण्डाघ्राणं च दक्षिणाम्।
आह्वानं स्वागतं चार्घ्यं विनाच परिवेषणम् ॥
विसर्जनं सौमनस्यमाशिषां प्रार्थनं तथा।
विप्रप्रदक्षिणां चैव स्वस्तिवाचनकं विना ॥
पितृनुद्दिश्य कर्तव्यं प्राचीनावीतिना सदा।

इति निर्णयसिन्धौ जमदग्निस्मरणात्। सूक्तस्तोत्रजपः भुञ्जानेषु विप्रेषु क्रियमाणः मधुवाता इत्यादिः। अर्घ्यम् अर्घपूरणम्। नतु अर्घदानम्। तत्रापसव्योक्तेः। सौमनस्यं—शिवा आपः सन्तु इत्यादिना ब्राह्मणहस्ते जलादिदानम्। आशिषां प्रार्थनम् अघोराः पितरः सन्तु इत्यादि। स्वस्तिवाचनकं स्वस्ति भवन्तो ब्रुवन्त्विति दक्षिणास्वीकारः। एतदतिरिक्तं विशेषतः पितृनुद्दिश्य क्रियमाणमपसव्येन कार्यम्। दिग्बन्धनादिकं तु साधारण्यात् सव्येनैवेति बोध्यम्।

ये लोका दानशीलानां ये लोकाः पुण्यकर्मणाम्।
सम्पूर्णान् सर्वभोगैस्तु तान् व्रजध्वं सुपुष्कलान्॥
इहास्माकं शिवं शान्तिरायुरारोग्यसम्पदः।
वृद्धिः संतानवर्गस्य जायतामुत्तरोत्तरा॥

इति पितॄन् देवांश्च विसृज्य—

अद्य मे सफलं जन्म भवत्पादाभिवन्दनात्।
अद्य मे गोत्रजाः सर्वे गता वोऽनुग्रहाद्दिवम्॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः।
तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतां मम॥

इति ब्राह्मणान् प्रार्थयेत्। अस्तु सम्पूर्णमिति प्रतिव०। ततः—

ॐ मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत।
अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्विषात्॥
(य०सं०१२।९०)

इति द्विजाशिखां विमुच्य—

ॐ त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानपां पतिर्वृषभ इष्टकानाम्। पुरीषं वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेताः॥ (य०सं०१३।३१)

इति पठित्वा (१)पाणिना दीपं प्रच्छाद्य (निर्वाप्य) हस्तौ

---

(१) निवृत्ते पितृमेधे तु दीपं प्रच्छाद्य पाणिना।
प्रक्षाल्य पाणी आचम्य ज्ञातीन् शेषेण भोजयेत्॥

इति श्राद्धतत्त्वे(२४८)देवलस्मरणात् श्राद्धान्ते दीपप्रच्छादनं लभ्यते। अत्र प्रच्छादनमाच्छादनमात्रं, नतु निर्वापणम्।

दीपनिर्वापणात् पुंसः कूष्माण्डच्छेदनात् स्त्रियाः।
अचिरेणैव कालेन वंशनाशो भवेद् ध्रुवम्॥

इति नव्यवर्धमानधृतवचनादिति तत्रैव रघुनन्दनः।

पादौ प्रक्षाल्याचम्य यस्य स्मृत्या च० प्रमादात्कुर्वतां० कायेन वाचा० चतुर्भिश्च० इति पठित्वा अनेन सपिण्डीकरणश्राद्धेन श्रीभगवान् यज्ञपुरुषः प्रसन्नोऽस्तु ॐतत्सन्न ममेति वदेत् ॥

इति सपिण्डीकरणश्राद्धप्रयोगः ।

अथाश्वत्थपूजा ।

अश्वत्थसन्निधौ गत्वा दीपं प्रज्वाल्याचम्यार्घं संस्थाप्य प्राणानायम्य हस्ते जलादिकमादाय अद्येहामुकगोत्रोऽमुकशर्माहं सपरिवारस्य ममोत्तरत्र शुभफलप्राप्त्यर्थं तथाऽमुकगोत्रस्यामुकशर्मणोऽस्मत्पितुरक्षय्यतृप्तिकामनया विष्णुस्वरूपस्याश्वत्थस्य पूजनं षष्ठ्यधिकशतत्रयसंख्याकजलकुम्भैः ( अधिमासपाते नवत्यधिकशतत्रयसंख्याकजलकुम्भैः ) अभिषेचनं च करिष्ये इति सङ्कल्प्य नमोऽस्त्वनन्तायेति, ॐविष्णुरूपायाश्वत्थाय नम इति च पाद्यार्घाचमनीयवस्त्रगन्धाक्षतधूपदीपनैवेद्यादीनि भूषणार्थं द्रव्यं च समर्प्य त्रिसूत्र्या संवेष्ट्याश्वत्थं सिञ्चेत्—

ॐअश्वत्थ विष्णुरूपस्त्वं नमो धरणिसम्भव ।
अद्भिरन्नैश्च शाकैश्च विगतासून् यतस्ततः ॥
तत्रतत्र स्थितान्नित्यं तर्पयस्व पितॄन्मम ।
सेचयामि जलैरद्य नमो नारायणात्मने ॥

इत्यभिषिञ्चेत् ।(१)ततो नूतनवस्त्रं धारयित्वा यज्ञोपवीतं च

---

( १ ) एवं सपिण्डनं कृत्वा क्रियावस्त्राणि संत्यजेत् ।
शुक्लाम्बरधरो भूत्वा शय्यादानं प्रदापयेत् ॥

इति गारुडे (१३।५८) नूतनवस्त्रपरिधानपूर्वकशय्यादानादिविधानात् नूतनवस्त्रपरिधानमावश्यकं बोध्यम् ।

अतः पूर्वं-कृत्वा सपिण्डनं तार्क्ष्य प्रकुर्यात् पितृतर्पणम् ।
उदाहरेत् स्वधाकारं वेदमन्त्रैः समन्वितम् ॥ ४९ ॥
वर्षवृत्तिं घृतं चान्नं सुवर्णं रजतं सुगाम् ।

परिवर्त्याचम्य तिलकं कृत्वा रक्षां बन्धायित्वा ब्राह्मणान् प्रणम्य शान्तिकाध्यायं पठन् गृहं गच्छेत् । मार्गमध्ये एव रक्षां विसृज्य गृहद्वारि स्थित्वा सुमुखश्चेत्यादि पठन् गृहं प्रविशेत् ।

(१)प्रविश्यासने उपविश्य दीपं प्रज्वलय्याचम्य हस्ते कुशजलादिकं गृहीत्वा देशकालौ सङ्कीर्त्य मम कुले अमुकनिधनजनितसूचितानिष्टाशुचित्वनिरासपूर्वकमस्य गृहस्य शुभत्वसिद्ध्यर्थं स्वस्तिवाचनपूर्वकं पुण्याहवाचनं करिष्ये । तत्रादौ निर्विघ्नतासिद्ध्यर्थं

---

अश्वं गजं रथं भूमिमाचार्याय प्रदापयेत् ॥ ५३ ॥
ततश्च पूजयेन्मन्त्रैः स्वस्तिवाचनपूर्वकम् ।
कुङ्कुमाक्षतनैवेद्यैर्ग्रहान् देवीं विनायकम् ॥ ५४ ॥
आचार्यस्तु ततः कुर्यादभिषेकं समन्त्रकम् ।
बध्वा सूत्रं करे दद्यान्मन्त्रपूतांस्तथाऽक्षतान् ॥ ५५ ॥
ततश्च भोजयेद्विप्रान् मिष्टान्नैर्विविधैः शुभैः ।
दद्यात् सदक्षिणांस्तेभ्यः सजलान्नान् द्विषड्घटान् ॥५६॥
वार्यायुधप्रतोदास्तु दण्डस्तु द्विजभोजनात् ।
स्पृष्ट्व्यानन्तरं वर्णैः शुध्येरंस्ते ततः क्रमात् ॥ ५७ ॥
इत्युक्तम् । शय्यादानानन्तरं च--
एवं दत्त्वा सुतः शय्यां पददानं प्रदापयेत् ।
तच्छृणुष्व मयाऽऽख्यातं यथावत्कथयामि ते ॥ ८२ ॥
छत्रोपानहवस्त्राणि मुद्रिका च कमण्डलुः ।
आसनं पञ्च पात्राणि पदं पञ्चविधं स्मृतम् ॥ ८३ ॥
दण्डेन ताम्रपात्रेण ह्यामान्नैर्भोजनैरपि ।
अर्थयज्ञोपवीतैश्च पदं सम्पूर्णतां व्रजेत् ॥ ८४ ॥
त्रयोदशपदानीत्थं यथाशक्त्या विधाय च ।
त्रयोदशभ्यो विप्रेभ्यः प्रदद्याद् द्वादशेऽहनि ॥८५॥ इत्युक्तम् ॥
अशक्तौ त्रीणि पदानि देयानि । तत्राप्यशक्तौ एकमवश्यं देयम् ।

(१) गृहं प्रविश्य शय्यादानादिकं कृत्वा गणेशपूजनादिकं कार्यम् । एकादशदिने एव सर्वदानाचरणे तु प्रवेशानन्तरमेव तदिति बोध्यम् ।

गणेशपूजनं करिष्ये इति सङ्कल्प्योक्तविधिना गणेशं सम्पूज्य आनोभद्रा इत्यादिस्वस्तिवाचनं पुण्याहवाचनं च कृत्वा ब्राह्मणैरभिषिक्तो ब्राह्मणान् प्रणमेत् । ब्राह्मणाश्च आब्रह्मन्नित्यादि पठित्वाऽऽशीर्वादं दद्युः । ततो यथाशक्ति ब्राह्मणान् भोजयित्वा दक्षिणां दद्यात् ।

इत्यश्वत्थपूजनादिविधिः ।

## अथ पञ्चकमरणशान्तिः ।

(१)इयं च सपिण्डीकरणानन्तरं त्रयोदशाहे कार्या ।

तत्र पञ्चकात्पूर्वं मृतस्य पञ्चके दाहप्राप्तौ पुत्तलविधिरेव, न शान्तिकम् । पञ्चके मृतस्य पञ्चकानन्तरं दाहे शान्तिकमेव, न पुत्तलविधिरिति विवेको धर्मसिन्धौ ।

तत्रायं प्रयोगः ।

प्रातः कृतनित्यक्रियः परिहितशुद्धवस्त्रः पुत्रादिर्गोमयाद्युपलिप्तायां तीर्थादिभूमौ शान्तिसामग्रीं सम्पाद्यासने समुपविश्य दीपं प्रज्वलय्याचम्य कुशजलादिकं गृहीत्वा पञ्चकशान्तिकर्मणि निर्विघ्नतासिद्ध्यर्थं श्रीमद्भगवतो गणेशस्य पूजनं करिष्ये इति सङ्कल्प्य यथाविधि गणेशं सम्पूज्य हस्ते कुशजलादिकं

---

(१) "दैवात्प्रत्याब्दिकश्राद्धे त्वन्तरामृतसूतके ।
आशौचानन्तरं कुर्यात् तन्मासेन्दुक्षयेऽपिवा ॥

इति गोभिलीयवचने "आशौचानन्तरम्" इति सामान्याभिधानेऽपि सूतके एकादशादिने मृतके त्रयोदशादिने इति द्रष्टव्यम् ।

मृते त्रयोदशे श्राद्धं वृद्धावेकादशेऽहनि ।

इति विशेषस्मरणात्" इति नन्दपण्डितेन नैमित्तिकस्य श्राद्धस्य मृतकपाते त्रयोदशे कर्तव्यत्वबोधनात् शान्तेरपि नैमित्तिकत्वात् त्रयोदशे एवोचितत्वादिति ।

गृहीत्वा देशकालौ सङ्कीर्त्य अमुकगोत्रोऽमुकशर्माऽहममुकगोत्रस्यास्मत्पित्रादेर्धनिष्ठादिपञ्चकदुर्मरणजनितदोषोपशान्त्यर्थं मम गृहे सर्वेषां बालादीनां दीर्घायुरारोग्यसुखप्राप्त्यर्थं (१)ब्रह्माण्डपुरा-

(१) स्वगृह्योक्तविधानेन कृत्वाऽग्निस्थापनं ततः ।
अभिध्यानं निर्वपणं देवतानां तथा शृणु ॥
वसवो वरुणश्चैव अजैकपात्तृतीयकः ।
अहिर्बुध्न्यश्चतुर्थश्च पूषा वै पञ्चमस्तथा ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
अघोररुद्रं मन्त्रैश्च निर्वापयेत्क्रमेण च ।
विधिना श्रपणं कृत्वा एकैकामाहुतिं हुवेत् ॥
कुण्डादीशानदिग्भागे स्थण्डिलं हस्तमात्रकम् ।
तत्र वस्त्रं समास्तीर्य स्थापयेद्वस्वादिपञ्चकम् ॥
चतुर्दश यमांश्चैव अघोरं स्थापयेत्पुनः ।
अव्रणान् कलशान् दिक्षु चतुरो विन्यसेत् क्रमात् ॥
कलशं पञ्चमं मध्ये स्थापयेद्विधिपूर्वकम् ।
उच्चार्य वारुणं मन्त्रं पूरयेत्तीर्थवारिणा ॥
मध्ये सर्वौषधीः क्षिप्त्वा मृद्दूर्वापञ्चपल्लवान् ।
हिरण्यं फलसंयुक्तं वस्त्रेणावेष्टयेत्ततः ॥
कलशोपरि न्यसेन्मूर्तीः पञ्च स्वर्णमयीस्तथा ।
प्रतिष्ठापूजनं कार्यं पञ्चसूक्तान् जपेत्ततः ॥
श्रपयित्वा चरुं विद्वान् दद्यादग्निमुखं ततः ।
आघारावाज्यभागौ च ततो वह्निं समर्चयेत् ॥
समित्तिलैश्च चरुभिः होमं कुर्यात्पृथक् पृथक् ।
अघोरेणैव मन्त्रेण ततो होमं चरोः क्रमात् ॥
पूर्णाहुतिं च विधिवत् पूजयेद्देवतास्ततः ।
इत्थं समाप्य हवनं धेनुं दद्यात् पयस्विनीम् ॥
सहिरण्याँस्तिलान्दद्याद् महिषीं सप्तधान्यकम् ।

णोक्तां पञ्चकनिधनशान्तिं करिष्ये। तत्पूर्वाङ्गत्वेन पुण्याहवाचनं कलशस्थापनपूर्वकं ग्रहपूजनं च करिष्ये इति सङ्कल्प्य पुण्याहवाचनं कृत्वा होमवेद्या ईशानकोणे कलशस्थापनविधिना कलशं संस्थाप्य तत्र ग्रहानावाह्य सम्पूज्य रक्षाविधानं च कृत्वा वेद्यां पञ्चभूसंस्कारान् कृत्वा वरदनामानमग्निं स्थापयेत्।

ग्रहकलशस्योत्तरतो भूमिं स्पृष्ट्वा यवान् विकीर्य चतुर्दिक्षु मध्ये च गन्धाक्षतार्चितान् वस्त्र(सूत्र)वेष्टितान् पञ्च कलशान् स्थापयित्वा जलेनापूर्य तत्र हिरण्यसर्वौषधिदूर्वामृत्तिकादीनि प्रक्षिप्य धान्यपूर्णपात्रैस्तान् पिधाय तदुपरि कृष्णवस्त्रमास्तीर्य तत्र सुवर्णमयीरग्न्युत्तारिताः पञ्चामृतस्नापिताः पञ्च धनिष्ठादिनक्षत्रदेवताप्रतिमा निधाय पार्श्वे दध्यक्षतपुञ्जादौ यमादीन् स्थापयेत्। तदुत्तरतो मृत्युञ्जयं च स्थापयेत्।

तत्र ॐभूर्भुवःस्वः वसुभ्यो नमः ॐभूर्भु० वरुणायन० ॐभूर्भु० अजैकपदे न० ॐभूर्भु० अहिर्बुध्न्यायन० ॐभूर्भु० पूष्णेन० ॐभूर्भु० यमायन० ॐभूर्भु० धर्मराजाय० ॐभूर्भु० मृत्यवे०ॐभूर्भु०अन्तकाय०ॐभूर्भु०वैवस्वताय० ॐभूर्भुवः०कालाय०ॐभूर्भु०सर्वभूतक्षयाय०ॐ०औदुम्बराय०ॐ०दध्नाय०ॐ०

---

सहिरण्यं घृतं दद्यात् कृष्णवस्त्रं सदक्षिणम्॥
अभिषेकं ततः कुर्यात् कलशोदकतस्तथा।
कलशैः स्नपनं तस्य कुर्यादाज्यावलोकनम्॥
वस्त्रं चैव परित्याज्यं रुद्रभक्तिविशेषतः।
ब्राह्मणान् भोजयेत् पश्चात् पायसं मधुसर्पिषा॥
एवं यः कुरुते पुत्र शुभं तस्य प्रजायते।
विधानं यो न कुर्वीत विघ्नस्तस्य भवेत् सदा॥
तस्मात् सर्वप्रयत्नेन शान्तिं कुर्यात् यथाविधि। इति॥
इति ब्रह्माण्डपुराणोक्ताः पञ्चकशान्तिश्लोकाः॥

नीलाय० ॐ० परमेष्ठिने० ॐ० वृकोदराय० ॐ० चित्राय० ॐ० चित्रगुप्ताय० ॐ० मृत्युञ्जयाय नम इति नाममन्त्रैर्महाव्याहृतिपूर्वकं सर्वान् तत्रतत्रावाह्य 'एतन्त' इति प्रतिष्ठाप्य पूर्वोक्तनाममन्त्रैरेव संपूज्य पञ्चसु कलशेषु वक्ष्यमाणसूक्तजपार्थं पञ्च ब्राह्मणान् एकमेववा ब्राह्मणं पादप्रक्षालनपूर्वकं वृत्वा कुण्डलमुद्रिकादिकं च सति संभवे दत्त्वा 'जापका जपध्वम्' इति तान् नियोजयेत् ।

तत्र प्रथमकलशे "कृणुष्वपाज" इति (य० सं० १३।९–१३) ५ कण्डिकात्मकसूक्तजपः । द्वितीये "विभ्राट्" (य० सं० ३३।३०–४३ ) इत्यनुवाकज० । तृतीये " आशुः शिशानः " १७ इति (य० सं० १७।३३–४९) ज० । चतुर्थे "नमस्ते" १६ इति ( य० सं० १६।१–१६) जपः । पञ्चमे "ऋचं वाचम्० (य० सं० ३६। १–२४) शां० सू० ज० । ततः प्रणीताप्रणयनादिपर्युक्षणान्तां कुशकण्डिकां विधाय वरदनामानमग्निं प्रतिष्ठाप्य ध्यात्वा सम्पूज्य रेखापूजनं जिह्वापूजनं च कृत्वा प्रणीताग्न्योर्मध्ये प्रोक्षणीं निधाय द्रव्यदेवताभिध्यानं कुर्यात् ।

अद्येह पञ्चकनिधनशान्तिकर्मणा यक्ष्ये । तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन, वसून् वरुणमजैकपादमहिर्बुध्न्यं पूषाणं यमं धर्मराजं मृत्युमन्तकं वैवस्वतं कालं सर्वभूतक्षयमौदुम्बरं दध्नं नीलं परमेष्ठिनं वृकोदरं चित्रं चित्रगुप्तं मृत्युञ्जयं समिच्चरुतिलैः शेषेण स्विष्टकृतमग्न्यादिनवदेवता आज्येनाहं यक्ष्ये । इदं चर्वादिद्रव्यं तत्तद्देवताभ्यो मया परित्यक्तं यथादैवतमस्तु न मम । ततः आघारावाज्यभागौ च हुत्वा ॐ वसुभ्यः स्वाहा ॐ वरुणाय स्वाहा ॐ अजैकपदे स्वाहा ॐ अहिर्बुध्न्याय स्वाहा ॐ पूष्णे स्वाहा इति चतुर्थ्यन्तैर्नाममन्त्रैः "वसोः पवित्रमसि" इति (य० सं० १।२) "वरुणस्योत्तम्भनमसि" (य० सं० ४।३६) इति "उत०

नोऽहिर्बुध्न्यः'' इति (य०सं०३४।५३) ''शिवो नामासि'' इति (य०सं०३।६३) ''पूषन् तव व्रते'' इति (य०सं०३४।४१) वेदमन्त्रैर्वा समिच्चरुतिलान् एकैकस्मै १०८ कृत्वः २८ कृत्वः ८ कृत्वो वा हुत्वा ''या ते रुद्र शिवा तनूरघोरा'' इति मन्त्रेण त्र्यम्बकमन्त्रेण वा १०८ अष्टोत्तरशतकृत्वस्तिलहोमं कृत्वा ग्रहाणांचैकैकामाहुतिं तिलैर्दत्त्वा स्विष्टकृद्धोमं कृत्वा आज्येन नवाहुतीर्हुत्वा पूर्णाहुतिं जुहुयात्। ततः संस्रवप्राशनादि पूर्णपात्रदानान्तं कुर्यात्। ततः षड्ब्राह्मणभोजनसङ्कल्पः। ततः पञ्चकलशोदकेन सपरिवारस्य यजमानस्याभिषेकादिकम्।

त्रिपुष्करनिधनेऽपीयमेव शान्तिर्द्रष्टव्या। तत्र कलशास्त्रयः। तेषु आद्ये कलशे तिथिदेवतास्थापनम्। द्वितीये वारदेवतायाः। तृतीये नक्षत्रदेवतायाः। तत्र भद्रातिथि (२।७।१२) देवताः ब्रह्मा रविर्विष्णुश्च। यस्यां तिथौ निधनं तत्तिथिदेवता स्थाप्या। वार(१।३।७)देवता, व्यक्ता एव। त्रिपान्नक्षत्र(३।७।१२।१६।२१।२५)देवताश्च वह्निः, अदितिः, अर्यमा, इन्द्राग्नी, विश्वे, अजैकपाच्च। यन्नक्षत्रे निधनं तन्नक्षत्रदेवता स्थाप्या। अन्यत्सर्वं समानम्।

इति पञ्चकनिधनशान्तिप्रयोगः।

सपिण्डीकरणानन्तरं प्रत्यहं वर्षपूर्तिपर्यन्तं त्रयोदशाहमारभ्य उदकुम्भश्राद्धं कर्तव्यम्।

अथोदकुम्भश्राद्धप्रयोगः।

आसने समुपविश्याचम्य दीपं प्र० ''यंब्रह्मवेदान्तेति पठित्वा 'एतं त' इत्यादिना कुशवटुं प्रतिष्ठाप्य अपसव्येन उदकुम्भश्राद्धे 'भवान्मया निमन्त्रित' इति निमन्त्र्य नियमान् श्रा० पाद्यं पादार्घं च दत्त्वा अन्यासने समुपवेश्याचाम्य सव्यं कृत्वास्वयमा-

चम्य भूमौ स्पर्शपू० त्रिकोणं मण्डलं विलिख्य तदुपरि शङ्खचक्रे लिखित्वा आसनं तदुपरि पात्रं पात्रे पवित्रं "पवित्रे स्थोवैष्णव्यौ" इति "शन्नोदेवीरिति जलेनापूर्य "यवोसीति यवान् "तिलोसीति तिलान् गन्धपुष्पाक्षतादि च तूष्णीं निक्षिप्य वरुणमावाह्य कर्मपात्रं सुसंपन्नम् । सुसम्पन्नमस्तु । तेन जलेन आत्मानम् उदकुम्भश्राद्धसामग्रीं च सम्प्रोक्ष्य प्राणानायम्य ॐ पुण्डरीकाक्षाय नमः ३ ।

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥ इति त्रिर्जपित्वा

अपसव्यम्—

सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥
श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।

मनसा च पित्रादिकं ध्यात्वा ततः सान्नोदकुम्भश्राद्धं समारभे। समारभस्व इति प्रतिवचनम् । ततो नीवीं बध्वा सव्यं कृत्वा कर्मपात्रमभिमन्त्र्य पाकं प्रोक्ष्य दिग्बन्धं कृत्वा हस्ते जलादिकं गृहीत्वा देशकालकीर्तनान्ते अमुकगोत्रस्य मम पित्रादेः अमुकशर्मणो वसुस्वरूपस्य प्रात्यहिकक्षुत्पिपासोपशान्त्यर्थमुदकुम्भश्राद्धं करिष्ये इति सङ्कल्प्य अपसव्येन अद्येहामुकगोत्रस्य अस्मत्पित्रादेः अमुकशर्मणः वसुस्वरूपस्य सान्नोदकुम्भश्राद्धे इदं मोटकासनमस्तु । ॐभूर्भुवः स्वः इदमासनमास्यताम् । आसे इति प्रतिवचनम् ।

ततो गन्धादिना ब्राह्मणं सम्पूज्य अद्येहामुकगोत्र अस्मत्पितः अमुकशर्मन् वसुस्वरूप सान्नोदकुम्भश्राद्धे अर्चनविधाविमानि गन्धाक्षतादीनि मद्दत्तानि ते स्वधा। अर्चनविधौ सर्वं परिपूर्णमस्तु, अस्तु परिपूर्णम्। वर्तुलं मण्डलं कृत्वा तत्र पात्रमासाद्य वामभागे जलपूर्णकुम्भं च संस्थाप्य सव्येन विष्णवे नैवेद्यं समर्प्य पात्रे ऽन्नं परिविष्य गायत्र्याभ्युक्ष्य अपसव्येन उत्तानाभ्यां पाणिभ्यां मधुरपात्रमालभ्य जपति "ॐपृथ्वी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि स्वाहा—"विष्णो कव्यᳪं रक्ष"। "ॐअपहता असुरा रक्षाᳪंसि वेदिषदः" इति तिलान् विकीर्य "ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाᳪंसुरे" इत्यङ्गुष्ठग्रहणम्। इदमन्नमिमा आपः इदमाज्यमिदं शाकादिकं सर्वं कव्यम्। जलमोटकं गृहीत्वा अद्येह अमुकगोत्राय अस्मत्पित्रे अमुकशर्मणे वसुस्वरूपाय इदमन्नं सोदकुम्भं सोपस्करं यत्परिविष्टं यत्परिवेक्ष्यमाणममृतस्वरूपं ते स्वधा इत्युक्त्वा जलं भूमौ क्षिपेत्। पिण्डदानं कृताकृतमेव। भुक्तवते ताम्बूलादिकं दत्त्वा सव्येन दक्षिणामादाय कुशजलादिकं गृहीत्वा अद्येहामुकगोत्रस्यामुकशर्मणोऽस्मत्पित्रादेः कृतस्योदकुम्भश्राद्धकर्मणः साङ्गतासिद्ध्यर्थमिमां दक्षिणां ब्राह्मणाय दास्ये इति सङ्कल्प्य स्वस्तीति दक्षिणास्वीकारं कारयेत्। ततो देवताभ्य इति त्रिर्जपं विधाय अपसव्येन सप्तव्याधेति पठित्वा "उत्तिष्ठब्रह्मणस्पते इति विसर्जनं कुर्यात्। इदं श्राद्धं मया विधिहीनं कालहीनं श्रद्धाहीनं यत्कृतं तत्सुकृतमस्तु. यन्न कृतं तत् श्रीविष्णोः प्रसादात् सर्वं परिपूर्णमस्तु। अस्तु परिपूर्णम्। पाणिना दीपं निर्वाप्याचम्य यस्य स्मृत्येत्यादि पठेत्।

एतावत्करणासम्भवेतु आचम्य हस्ते जलादिकं गृहीत्वा

देशकालकीर्तनान्ते मम पित्रादेः प्रात्यहिकक्षुत्पिपासोपशमनार्थं सोदकुम्भसिद्धान्नेन ब्राह्मणं तर्पयिष्ये। भोजनकर्मणः साङ्गतासिद्ध्यै इमां दक्षिणां ब्राह्मणाय दास्ये इति सङ्कल्पनम् । आमान्नेन करणपक्षे इदं सोदकुम्भमामान्नं सदक्षिणं ब्राह्मणाय दास्ये इत्यूहनीयम् । अन्यत्सर्वं समानम् ।

इत्युदकुम्भश्राद्धप्रयोगः ।

अनेनैव विधिना प्रतिमासं मृततिथौ मासिकश्राद्धं कार्यम्। सपिण्डीकरणोत्तरं क्रियमाणानि मासिकानि अनुमासिकानीत्युच्यन्ते। एकादशाहे अपकृष्य क्रियमाणानि मासिकानि अनुगतानि इति व्युत्पत्तेः। प्रथममासिकस्य तु एकादशाह एव कालः। 'आद्यमेकादशे कार्यम्' इत्युक्तेः। द्वितीयमासाद्यतिथिस्तु द्वितीयमासिककालः। 'मासादौ मासिकं कार्यम्' इत्युक्तेः। अतस्तत्र द्वितीयमासिकश्राद्धं करिष्ये इति सङ्कल्प एवोचितो, नतु प्रथममासिकश्राद्धमिति। अनुमासिकानि तु द्वितीयमासादिसम्बन्धीनि एकादशैव भवन्ति। अधिमासे मृतस्य तु शुद्धमासीयाद्यतिथिलाभात् प्रथममनुमासिकमपि भवत्येवेति द्वादश भवन्ति ।

नेपालवासिभिः कौर्माचलैः सपिण्डीकरणोत्तरम् ऊनमासिकादीनां चतुर्णां श्राद्धानामपि आचरणात् तैः एकेन द्वाभ्यां त्रिभिर्वा दिनैः ऊने त्रिभागमासोने वा दिने नन्दा–चतुर्दश्यमातिथीर्भृगुवारं त्रिपुष्करयोगं च वर्जयित्वा द्वादशाहे एव वा ऊनमासिकं कार्यम् । त्रैपक्षिकं पक्षत्रयेऽतीते मृततिथौ कार्यम्। ऊनषाण्मासिकं सप्तममासिकश्राद्धात् पूर्वदिने कार्यम्। ऊनाब्दिकम् आब्दिकश्राद्धात् पूर्वदिने कार्यम।

अधिमासे मृतस्य सपिण्डीकरणोत्तरं पूर्वोक्तशुद्धदिने ऊनमासिकं कृत्वा शुद्धमासीयमृततिथौ आवृत्त्या प्रथममासिकं कृत्वा पक्षत्रयेऽतीते मृततिथौ त्रैपक्षिकं कृत्वा षष्टिदिनात्मके मासे अतीते मृततिथौ द्वितीयमासिकं कार्यम्। अयमेव क्रमः अधिकमासे मृतस्य एकादशाहे अपकृष्य अनुष्ठीयमानानां षोडशश्राद्धानाम् ।

अत्रेदं बोध्यम्। अधिककृष्णे मृतस्य सांवत्सरिकश्राद्धम् अमान्त-

मानेन परिगृहीतमासीयकृष्णपक्षे कार्यम् । न तु पौर्णमास्यन्तमानेन परिगृहीतमासीयकृष्णपक्षे । यथा श्रावणाधिककृष्णपक्षे मृतस्य साँवत्सारिकम् अमान्तमानेन परिगृहीतश्रावणमासीयकृष्णपक्षे (अर्थात् पौर्णमास्यन्तमानेन परिगृहीतभाद्रकृष्णपक्षे) कार्यम् । न तु पौर्णमास्यन्तमानेन परिगृहीतश्रावणकृष्णपक्षे । अधिकमासस्य अमान्तत्वनियमेन एतत्कृष्णपक्षस्य पौर्णमास्युत्तरकालिकत्वेन तन्मासीयपौर्णमास्युत्तरकाले एव तदनुष्ठानस्य कर्तुमुचितत्वात् ।

यथा अधिकश्रावणशुक्ले मृतस्य प्रथममासिकानुष्ठानम् अधिके शुद्धे च क्रमेण आवृत्त्या भवति तथैव श्रावणाधिककृष्णे मृतस्याऽपि अधिके शुद्धे च क्रमेण प्रथममासिकं भवितुमर्हति । तत्र प्रथमम् अधिकमाससम्बन्धि भवितुमर्हति । तस्य—

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वार्धस्तु मलो ज्ञेयः उत्तरार्धः शुभः स्मृतः ॥

इत्युक्तरीत्या अधिकस्य पूर्वार्धरूपत्वात् । उत्तरार्धस्य च अनेनैव तन्मासत्वबोधनात् तस्य च त्रिंशद्दिनरूपत्वात् शुद्धमासत्वेन शुद्धमासीयप्रथममासिकानुष्ठानं तन्मासीयकृष्णपक्षे एव अनुष्ठातुमुचितम् इति आवृत्त्या प्रथममासिकानुष्ठानम् अमान्तमानेन परिगृहीतश्रावणकृष्णपक्षे एव आपतति इति द्वितीयादिमासिकान्यपि अनेनैव क्रमेण भवेयुः इति द्वादशमासिकम् आषाढपौर्णमास्युत्तरकृष्णपक्षे आपतेत् इति सांवत्सरिकं श्रावणपौर्णमास्युत्तरकृष्णपक्षे एव फलति । अयमेव च मुख्यया वृत्त्या श्रावणकृष्णपक्षः । प्रतिवर्षम् अस्मिन्नेव पक्षे श्रावणाधिककृष्णे मृतस्य सांवत्सरिकं कार्यम् । उल्लेखश्च श्रावणस्यैव कार्यः ।

तुल्यन्यायात् श्रावणाधिककृष्णे जातस्य जन्मतिथ्युत्सवोऽपि श्रावणपौर्णमास्युत्तरकृष्णपक्षे एव कार्यः । अयं च सिद्धान्तः वाचस्पतिमिश्रकृते द्वैतनिर्णये नरहरिमिश्रकृते द्वैतनिर्णये कृष्णभट्टकृतायां निर्णयसिन्धुटीकायां च स्पष्टः । चैत्राधिमासनिर्णये विनायकशास्त्र्यादिभिश्च अङ्गीकृतः । अतो नात्र संशयितव्यं विन्ध्योत्तरवासिभिः इत्यलम् ।

इति अन्त्यकर्मदीपकस्य पूर्वार्धं समाप्तम् ।

# अन्त्यकर्मदीपकोत्तरार्धे।

अथ यतेर्देहपातोत्तरविधिः।

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च।
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया॥
दण्डग्रहणमात्रेण प्रेतत्वं नैव गच्छति।
प्रेतत्वस्य विमोक्षार्थं षोडशश्राद्धको विधिः॥
पिण्डोदकं नवान्नादि क्षुत्तृष्णाविनिवृत्तये।
सपिण्डीकरणश्राद्धं पितृत्वप्राप्तये विधिः॥

इत्यादिवचनैर्यतीनां दाहादिक्रियानिषेधात्पूर्वोक्तः सर्वोऽपि विधिर्यतिदेहे पञ्चत्वं प्राप्ते न भवति। किन्तु—

यतिं पुरुषसूक्तेन स्नापयित्वाऽवटं ततः। (कृत्वा)
प्रणवेनाष्टवारं तं प्रोक्षयेदथ सर्वतः॥
"विष्णो हव्यं रक्षस्वेति यजुषा प्रणवेनच।
गर्ते प्रेतं विनिक्षिप्य "इदंविष्णुर्विचक्रमे" ॥
इति मन्त्रेण दण्डं तु दद्याद्दक्षिणहस्तके।
मूर्धानं "भूर्भुवः स्वश्चेत्युक्त्वा शङ्खेन भेदयेत्॥
गर्तं पुरुषसूक्तेन लवणेन प्रपूरयेत्।
शृगालश्वादिरक्षार्थं सम्यग्गर्तं प्रपूरयेत्॥
इति बृहच्छौनकोक्तो विधिः।

प्रसङ्गादत्र पूर्वमातुरसंन्यासविधिः प्रदर्श्यते॥

स च जाबालोपनिषदि "यद्यातुरः स्यान्मनसा वाचा

वा संन्यसेत्" इत्यादिनोपदिष्टः। आतुरो द्विविधः। रोगादि-ना मुमूर्षुः, जलादिव्याघ्रादिभयाक्रान्तश्च।

आतुराणां च संन्यासे न विधिर्नैव च क्रिया।
प्रैषमात्रं समुच्चार्य संन्यासं तत्र कारयेत् ॥

इत्यादिवाक्यै रोगाद्यातुरस्य पुरुषसूक्तहोमविरजाहोमोप-वासजागरणाद्यङ्गकलापरहितः संन्यासो भवति।

तत्रायं प्रयोगः अङ्गिरसोक्तप्रकारेण प्रदर्श्यते।

प्रक्षालितपाणिपादः शुद्धवस्त्रे सन्धार्य मन्त्रस्नानं कृत्वा-ऽऽचम्य प्राणानायम्य--

हस्ते कुशादिकमादाय देशकालौ सङ्कीर्त्यामुकशर्माऽहं मम करिष्यमाणसंन्यासेऽधिकारसिद्ध्यर्थं चतुष्कृच्छ्रात्मकव्रतप्रत्या-म्नायगोचतुष्टयनिष्क्रयद्रव्यं रजतं चन्द्रदैवतं विप्रेभ्यो विभाय वा दातुमहमुत्सृजे इति सङ्कल्प्य दद्यात्।

पुनः कुशादिकमादाय देशकालकीर्तनान्ते मम निरतिशया-नन्दावाप्तये परमहंसाश्रमाधिकारसिद्ध्यर्थमातुरविधिना संन्यासमहं करिष्ये इति सङ्कल्प्य ब्राह्मणानुज्ञया शिखायाः पञ्च सप्त वा के-शानवशेष्य वपनं कृत्वा स्नात्वा सन्ध्यादिकर्म यथासम्भवं स-म्पाद्य जलसमीपं गत्वा पात्रे अप उद्धृत्य तस्मात् हस्ते जलमा-दाय अप्सु जुहोति। जलाशयसन्निध्यभावे पात्रान्तरे जलं धा-रयित्वा हस्ते जलमादाय तत्र जुहोति—

"ॐएष वाऽग्नेर्योनिर्यः प्राणः प्राणं गच्छ स्वां योनिं गच्छ स्वाहा" इति प्रथमाहुतिं हुत्वा—

"ॐआपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि स्वाहा" इति द्वितीयाहुतिं हुत्वा पात्रस्थं हुतशेषं जलम् "आशुः शिशान" इत्यनुवाकेन "जयन्तं त्वाऽनु देवा मदन्तु"

इत्यन्तेनाभिमन्त्र्य—

"ॐपुत्रैषणावित्तैषणालोकैषणा मया त्यक्ताः स्वाहा"

इत्यभिमन्त्रितोदकं हस्तेन किञ्चिदादाय प्रथमं पीत्वा--

"ॐअभयं सर्वभूतेभ्यो मत्तः स्वाहा" इति द्वितीयवारं किञ्चित्पीत्वा--

"ॐसंन्यस्तं मया स्वाहा" इति तृतीयवारं निःशेषं पिबेत्।

ततो गायत्रीं व्याहृतिषु प्रवेश्य व्याहृतीः प्रणवे प्रवेशयेत्।

तद्यथा-ॐभूः सावित्रीं प्रविशामि तत्स० ण्यम्।

ॐभुवः सावित्रीं प्रविशामि भर्गो०हि।

ॐस्वः सावित्रीं प्रविशामि धियो० यात् इति व्यासेन०--

ॐभूर्भुवः स्वः सावित्रीं प्रविशामि तत्सवि०यात्।

इति समासेन गायत्रीप्रवेशः।

ॐव्याहृतिं प्रविशामि भूः। ॐव्याहृतिं प्रविशामि भुवः।

ॐव्याहृतिं प्रविशामि स्वः। ॐव्याहृतीः प्रविशामि भूर्भुवः स्वः।

इति व्याहृतिप्रवेशः।

ततः प्राङ्मुख ऊर्ध्वबाहुः--

ॐभूः संन्यस्तं मया ॐभुवः संन्यस्तं मया ॐस्वः संन्यस्तं मया ॐभूर्भुवः स्वः संन्यस्तं मया इत्युपांशु मध्यममुच्चैश्च त्रिर्ब्रूयात्। ततः--

ॐअभयं सर्वभूतेभ्यो मत्तः स्वाहा इति प्राच्यां दिश्युदकं निनयेत्। ततस्तूष्णीं शिखां निकृत्य यज्ञोपवीतं च छित्त्वा तदुद्धयमुदकाञ्जलिना सह गृहीत्वा ॐभूः स्वाहा इ-

त्यप्सु जुहुयात् । तत ऊर्ध्वं पितृगृहं न गच्छेत् । अत्यन्तमातुरश्चेत्प्रैषमात्रं वदेत् । तत आचम्य यस्य स्मृत्येति पठेत् ।

इत्यातुरसंन्यासप्रयोगः ।

अथ ब्रह्मीभूतयतिदेहसंस्कारप्रयोगः ।

देहपातानन्तरं पुत्रादिः शिष्यो वा स्नात्वा आचम्य हस्ते कुशादिकं गृहीत्वा देशकालौ संकीर्त्य मम करिष्यमाणयातिसंस्कारेऽधिकारसिद्ध्यर्थं कृच्छ्रत्रयात्मकं प्रायश्चित्तं गोत्रयानिष्क्रयद्रव्यदानद्वाराऽहमाचरिष्यामि । तत्पूर्वाङ्गत्वेन वपनं करिष्ये इति संकल्प्य कक्षोपस्थशिखावर्जं वपनं कृत्वा स्नात्वाऽऽचम्य पुनः कुशादिकं गृहीत्वा इदं गोत्रयनिष्क्रयद्रव्यं रजतं चन्द्रदैवतं सद्यो यथाकालं वा दास्ये इति संकल्पयेत् । पुत्रातिरिक्तस्य वपनं न भवतीति केचित् । पुनः कुशादिकं गृहीत्वा देशकालौ संकीर्त्य ब्रह्मत्वं गतस्य नारायणस्वरूपिणो भिक्षोः बृहच्छौनकोक्तविधिना संस्कारं करिष्ये इति संकल्प्य अव्रणं नवं कलशमादाय तीर्थोदकादिना ऽऽपूर्य तदुदकं–

"गङ्गे च यमुने चैव" इत्यादिना––

ॐनारायणपरं ब्रह्म तत्त्वं नारायणः परः ।
नारायणपरो ध्याता ध्यानं नारायणः परः ॥
यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपिवा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥
देवदत्ततया कश्चिद्ब्रह्मैव विकृतिं गतः ।
पूर्णं ब्रह्मैव संप्राप्तस्तस्य ब्रह्म तदुच्यते ॥

इत्येतैर्मन्त्रैश्चाभिमन्त्र्य प्राणायामपुरःसरं "नमस्ते" इत्यादिभिः षोडशमन्त्रैः "सहस्रशीर्षा" इति पुरुषसूक्तेन "आपोहिष्ठा" इति तिसृभिश्च तदुदकेन यतिं स्नापयित्वा तच्छरीरम्

ॐनमो नारायणायेति मन्त्रेण वस्त्रचन्दनाद्युपचारैरभ्यर्च्य शिक्यादौ शरीरमारोप्य मन्त्रघोषैर्जयशब्दादिभिः शङ्खघण्टाशब्दादिभिश्च ग्रामात्प्राचीमुदीचीं वा दिशं नीत्वा ऽश्वत्थमूलं नदीतीरादिरूपं वा समाश्रयेत्।

तत्र भूमिनिखननपक्षे भूमिं व्याहृतिभिः संप्रोक्ष्य चतुर्हस्तप्रमाणं चतुरस्रमधोगर्तं देवयजननामकं खनित्वा तन्मध्ये सार्धहस्तपरिमितं लघुगर्तं कृत्वा "ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यम्" इति व्याहृतिभिर्गर्तं पञ्चगव्येन प्रोक्ष्य

जलप्रवाहणपक्षे गर्तस्थाने महानदीं परिकल्प्य तत्र पूर्ववत् पञ्चगव्यं प्रक्षिप्य प्रदक्षिणाग्रान् कुशानास्तीर्य गायत्र्या शरीरं प्रोक्ष्य पुरुषसूक्तेन शङ्खोदकेन संस्नाप्य प्रणवेनाष्टोत्तरशतवारं संस्नाप्य ॐनमो भगवते वासुदेवायेति मन्त्रेण षोडशोपचारैरभ्यर्च्य तुलस्यादिमिलितपुष्पमालाभिरभ्यर्च्य "विष्णो हव्यं रक्ष" इति शरीरं गर्ते नद्यां वा निधाय--

"ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहा" इति दण्डं त्रेधा कृत्वा दक्षिणहस्ते निधाय ॐहंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥ परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति। वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे॥ इति हृदये जपेत्। स्वशरीरं हस्तेनाभिमृशेत्।

ॐब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनि-

मसतश्च वि वः ॥ इति मूर्ध्नि जपेत् ।

ॐविष्णो रराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा इति नाभौ जपेत् ।

ॐदेवस्य त्वा सवितुः० इति कर्णयोर्जपेत् । मूर्धानं "भूर्भुवःस्वः" इत्युक्त्वा शङ्खेन नारिकेलेन वा भेदयेत् ।

ॐभूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ॥ इति मन्त्रेण परश्वादिना भेदयेत् ।

शिरोभेदनं कर्तुमशक्तश्चेत् शिरसि गुडपिण्डं नारिकेलादिफलं वा निधाय भिन्द्यादित्याचारः ।

प्रणवेन देवयजनं दर्भैराच्छाद्य सिकतादिना पूरयेत् ।

नद्यादौ चेच्छिरोभेदनानन्तरं पूर्वोक्तसप्तव्याहृतिभिरभिमन्त्र्य दर्भैराच्छाद्य "भूर्भुवः स्वरोम्" इत्यभिमन्त्र्य पाषाणैर्दृढं बद्ध्वाऽगाधजले भिक्षुदेहम् "ॐस्वाहा" इति विमुञ्चेत् ।

ततो "जन्मारभ्यसम्भावितपापैर्मुक्ता वयमश्वमेधसहस्रफलं प्राप्ताः" इति भावयन्तो नमस्कृत्यागमनोत्सवादधिकोत्सवं कुर्वन्तो यत्रापस्तत्र गच्छेयुः । उच्चैर्हरिस्मरणपूर्वकमवभृथबुद्ध्या सर्वे स्नात्वा वस्त्रादि धारयेयुः । पुत्रादिः कर्ता स्नात्वाऽऽचम्य हस्ते जलादिकं गृहीत्वा सिद्धिं गतस्य ब्रह्मभूतस्य नारायणस्वरूपिणस्तृप्त्यर्थं तर्पणं करिष्ये इति सङ्कल्प्य सव्येन देवतीर्थेनैव "आत्मानं तर्पयामि अन्तरात्मानं तर्पयामि परमात्मानं तर्पयामि" इति चतुर्वारं तर्पणं कुर्यात् ।

ततः शुक्लपक्षे सिद्धिं गतश्चेत् केशवं तर्पयामि नारायणं तर्पयामि माधवं० गोविन्दं० विष्णुं० मधुसूदनं० त्रिविक्रमं०

वामनं० श्रीधरं० हृषीकेशं० पद्मनाभं० दामोदरं० इति–

कृष्णपक्षे सिद्धिं गतश्चेत् सङ्कर्षणं० वासुदेवं० प्रद्युम्नं० अनिरुद्धं० पुरुषोत्तमं० अधोक्षजं० नारसिंहं० अच्युतं जनार्दनं० उपेन्द्रं० हरिं० श्रीकृष्णं० इति द्वादशनामभिस्तर्पयेत्। इदं तर्पणं क्षीरेणेति केचित्। ततस्तीरं प्राप्य धौतवस्त्रं परिधायाचम्य सिद्धिं गतस्य ब्रह्मभूतस्य परमहंसनारायणस्वरूपिणस्तृप्त्यर्थं नारायणपूजनं करिष्ये इति सङ्कल्प्य देवयजनोपरि नदीतीरे वा चतुरस्रवेदिकां संपाद्य तत्र मृन्मयं लिङ्गं संस्थाप्य नदीजले एव वा तत्स्वरूपं विचिन्त्य पुरुषसूक्तेन "ॐनमोनारायणाय" इत्यष्टाक्षरेण वा आवाहनाद्युपचारैः पूजयेत्। ततः पायसबलिं दत्त्वा घृतदीपं च समर्प्य पायसबलिं नद्यादौ क्षिपेत्। ततः शङ्खेन शुद्धजलमादाय तत्र गन्धपुष्पतुलसीदलानि प्रक्षिप्य "ॐब्रह्मणे नमः इदमर्घ्यं समर्पयामि" इत्येवमष्टार्घ्याणि दद्यात्। एवं प्रकारेण संपूज्य सर्वे वाद्यादिघोषेणात्युत्सवेन गृहं गच्छेयुः। इति प्रथमदिनकृत्यम्।

यतेः सूतकं न भवति। सम्यग् व्रताचरणं कुर्यात्। पुत्रादिर्दशदिनपर्यन्तं प्रत्यहं केशवादिद्वादशनामभिः संकर्षणादिद्वादशनामभिर्वा तर्पणं पूर्वोक्तनारायणपूजनं पायसबलिदानं घृतदीपदानमर्घ्यदानं च कुर्यात्।

## अथ यतेरेकादशाहे पार्वणम्।

### तत्रायं प्रयोगः—

एकादशाहे (१)पुत्रः प्रातर्नित्यक्रियो मध्याह्ने नद्यादौ स्नात्वा

(१) पुत्रादन्यः शिष्यादिः कर्ता चेत् नद्यादौ स्नात्वा यज्ञोपवीत्येव आत्मानं तर्पयामि अन्तरात्मानं तर्पयामि परमात्मानं तर्पयामि इति देवतीर्थेन एकैकमञ्जलिं दद्यात्।

तिलतर्पणं कुर्यात् । ततो गृहमागत्य गोमयादिनोपलिप्ते शुचि-स्थले उपविश्य श्राद्धसामग्रीं संपाद्य गणेशं शालग्रामं च संस्थाप्य दक्षिणाभिमुखं दीपं प्रज्वलय्याऽऽचम्य दीपं संपूज्य हस्तयोः पुष्पाणि संगृह्य--

ॐ यं ब्रह्म वेदान्तविदो वदन्ति परे प्रधानं पुरुषं तथाऽन्ये ।
विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय ॥
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥

इति गणेशोपरि पुष्पाञ्जलिं समर्प्य—

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्याये सर्वविघ्नोपशान्तये ॥

इति विष्णुं ध्यात्वा पुष्पाञ्जलिं समर्पयेत् । ततो वैश्वदेवि-कब्राह्मणं ब्रह्मीभूतपित्रादि(गुरु)ब्राह्मणं च कुशमयं सम्पाद्य तैला-भ्यङ्गपूर्वकं संस्नाप्य "ॐ एतंते" इति पठित्वा ॐ भूर्भुवःस्वः विश्व-देवसम्बन्धिकुशब्रह्मन् सुप्रतिष्ठितो वरदो भव। ब्रह्मीभूतपित्रादि-(आत्मादि) सम्बन्धिकुशब्रह्मन् सुप्र० इति प्रतिष्ठापयेत् । ततः—

कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः पुरा ।
त्वय्यर्चिते सोऽर्चितोऽस्तु यस्याहं नाम कीर्तये ॥ इति पठेत् ।

ततो यवान् गृहीत्वा अद्येह अमुकगोत्रब्रह्मीभूतपित्रादि-त्रयश्राद्धसम्बन्धिनां पुरूरवार्द्रवसंज्ञकानाम् ('आत्मादित्रय श्राद्धसंम्बन्धिनां साधुरुरुसंज्ञकानां) (१)विश्वेषां देवानामेका-

---

(१) सम्बन्धनामगोत्रैश्च पार्वणं द्वादशेऽहनि ।
तत्क्रमात् ज्ञातयः कुर्युः एकादशदिनेऽपि वा ॥
अथवात्मान्तरात्मेति परमात्मेत्युदाहृतेः ।
तत्र श्राद्धे साधुरुरवो विश्वेदेवाः प्रकीर्तिताः ॥

दशाहकर्तव्ये पार्वणश्राद्धे भवान्मया निमन्त्रित इति निमन्त्रयेत्। निमन्त्रितोऽस्मि इति प्रत्युक्तिः।

अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा॥
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः।
भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि॥

इति नियमान् श्रावयेत्। आगतं वः। स्वागतम्। चरणप्रक्षालनार्थं जलम्—एतद् वः पाद्यमस्तु।

यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठपुष्करे।
तत्फलं पाण्डवश्रेष्ठ विप्राणां पादशोधने॥

इति पादौ प्रक्षालयेत्।

ततोऽपसव्येन (शिष्यादिः सव्येनैव यवानेव गृहीत्वा) तिलान् गृहीत्वा अमुकगोत्राणां ब्रह्मीभूतपितृपितामहप्रपितामहानाममुकशर्मणां वसुरुद्रादित्यस्वरूपाणाम् (आत्मान्तरात्मपरमात्मनाम्) एकादशाहकर्तव्ये पार्वणश्राद्धे भवान्मया निमन्त्रितः। नि०प्र०। पूर्ववन्नियमान् श्रावयित्वा सव्येन आगतं वः। सुस्वागतम् प्र०। अपसव्येन (शिष्यादिः सव्येनैव) चरणप्रक्षालनार्थं जलम्—एतद्वः पाद्यमस्तु। यत्फलङ्कपिलादाने० इति पादौ प्रक्षालयेत्। ततः सव्येन पादार्घं सम्पाद्य हस्ते गृहीत्वा अमुकगोत्रब्रह्मीभूतपित्रादित्रयश्राद्धसम्बन्धिनः पुरूरवार्द्रवसंज्ञकाः (आत्मादित्रयश्राद्धसम्बन्धिनः साधुरुरुसंज्ञकाः) विश्वेदेवा एष पादार्घो

---

इति सुमन्तुस्मरणात् पुत्रादिकर्तृके पार्वणश्राद्धे सम्बन्धनामगोत्रोल्लेखः, शिष्यादिकर्तृके तु आत्माऽन्तरात्मा परमात्मेत्युल्लेखः, साधुरुरुसंज्ञका विश्वेदेवाः, यज्ञोपवीतित्वं, तिलार्थे यवाः, सङ्कल्पादि पिण्डदानान्तमग्नौकरणवर्जं देवश्राद्धवत् इति विशेषः।

वोऽस्तु इति पादयोरर्घ्यं निवेद्य—

अपसव्येन ( शिष्यादिः सव्येनैव ) पित्रादिपादार्घं सम्पाद्य हस्ते गृहीत्वा अद्येह अमुकगोत्राः ब्रह्मीभूतास्मत्पितृपितामहप्रपितामहा अमुकशर्माणो वस्वरु० (आत्मान्तरात्मपरमात्मानः) एष पादार्घो वोऽस्तु इति पादयोरर्घ्यं निवेदयेत्। ततः सव्येन विश्वेषां देवानां "नमो ऽस्त्वनन्ताय" इति पादपूजनं कुर्यात्। अपसव्येन—

ॐपितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम्॥ ( शिष्यादिः सव्येनैव )।

इत्यनेन पितृब्राह्मणपादपूजनं ( आत्मादिब्राह्मणपूजनम् ) कुर्यात्। ततः सव्येन स्वयमाचम्य वैश्वदेविकब्राह्मणं श्राद्धदेशे

प्राङ्मुखमुपवेश्य आचाम्यापसव्येन ब्रह्मीभूतपित्रादिब्राह्मणमुत्तराभिमुखमुपवेश्याचामयेत्। (शि० आत्मादिब्रा० सव्येनैव)

ततः सव्येन कर्मपात्रस्थापनम्। वामभागे—

ॐ "भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः" इति मन्त्रेण भूमिं स्पृष्ट्वा तत्र गन्धादिना चतुष्कोणं कृत्वा तदुपरि शङ्खचक्रे लिखित्वा तदुपरि पूर्वाग्रदर्भानास्तीर्य तत्र कर्मपात्रं संस्थाप्य तत्र "पवित्रे स्थो वैष्णव्यौ" इति पवित्रं निक्षिप्य--

ॐशन्नो देवीरभिष्टयआपो भवन्तु पीतये। शँय्योरभिस्रवन्तु नः॥ इति जलेनापूर्य "यवोऽसि यवयास्मद्द्वेषो यवयारातीः" इति यवान् "ॐतिलोऽसि सोमदे-

वत्यो गोसवो देवनिर्मितः। प्रत्नमाद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहा" इति तिलान् गन्धपुष्पाक्षतादि च तूष्णीं निक्षिप्य--

ॐ आवाहयाम्यहं देवं वरुणं भुवनेश्वरम्।
सर्वौषधिरसं दिव्यममृतं प्राणधारकम्॥
अपांपते जगन्नाथ रसरूप गदाधर।
पद्मोद्भव इहागच्छ शक्रेण सहितः प्रभो॥
सगणश्च सभार्यश्च शिशुमारैकवाहन।
एहि देव जलाध्यक्ष पात्रेऽस्मिन् सन्निधिं कुरु॥

इति वरुणमावाह्य कर्मपात्रं सुसम्पन्नम्। सुसंपन्नम् प्र०। तेन जलेनात्मानं श्राद्धसामग्रीं च संप्रोक्ष्य ॐपुण्डरीकाक्षाय नमः ३ इति स्मृत्वा—

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः॥

इति त्रिर्जपित्वाऽपसव्येन—(शि० सव्येनैव)

सप्त व्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः॥
प्रस्थिता दीर्घमध्वानं यूयं किमत्रसीदथ।
श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम्॥

मनसा च पितॄन् (गुरुं) ध्यात्वा ब्रह्मीभूतपित्रादिपार्वणश्राद्धं (आत्मादिश्राद्धं) समारभे। स० प्र०। नीवीबन्धनमपसव्येन। वामकट्यां तिलजलयुतं मोटकं बन्धयेत्—( शि० न बन्धयेत् )

"ॐसोमस्य नीविरसि विष्णोः शर्मासि शर्म यजमानस्येन्द्रस्य योनिरसि सुसस्याः कृषीस्कृधि" इति

मन्त्रेण । सव्येन दिग्बन्धनम्—

अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।
तथा बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः ॥
प्रतीचीमाज्यपाः पान्तु उदीचीमपि सोमपाः ।
विदिशश्च गणाः सर्वे रक्षन्तूर्ध्वमधोऽपि वा ॥
रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ।
सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ॥
तिला रक्षन्तु दितिजान्(त्)दर्भा रक्षन्तु राक्षसान्(त्) ।
पाङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः ॥ इति ।

ततः सव्येनैव त्रिभिर्दर्भैः कर्मपात्राभिमन्त्रणम्—

ॐ यद्देवा देवहेडनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः ॥ यदि दिवा यदि नक्तमेनाꣳसि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः ॥ यदि जाग्रद्यदि स्वप्नएनाꣳसि चकृमा वयम् । सूर्यो मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः ॥ एतैर्मन्त्रैर्जलमभिमन्त्रयेत् । तज्जलेन शूद्रादिदुष्टदृष्टिनिपातात्पाकादीनां पवित्रताऽस्तु इति पाकं प्रोक्ष्य सव्येनैव प्रतिज्ञासङ्कल्पं कुर्यात् । हस्ते कुशादिकमादाय देशकालौ सङ्कीर्त्य अमुकगोत्रस्य ब्रह्मीभूतस्यास्मत्पितुरमुकशर्मणः करिष्यमाणदर्शादिसर्वश्राद्धाधिकारसिद्ध्यर्थम् (ब्रह्मभूतस्य गुरोः सांवत्सरिकादिश्राद्धाधिकारसिद्ध्यर्थम्) एकादशाहे आद्यपार्वणश्राद्धमर्घपिण्डसहितं करिष्ये । इति सङ्कल्प्य ऋजुकुशान् गृहीत्वा अद्येहामुकगोत्रब्रह्मीभूतास्मत्पित्रादित्रयश्राद्धसम्बन्धिनां पुरूरवार्द्रवसंज्ञकानां (आत्मादिश्राद्धसम्बन्धिनां साधुरुरुसंज्ञकानां) विश्वेषां देवानामिदं कुशासनमस्तु । ॐ भूर्भुवः

स्वः इदमासनम् आस्यताम् । आसे इति प्र० । अपसव्येन मोटकं गृहीत्वा अद्येहामुकगोत्राणां ब्रह्मीभूतास्मत्पितृपितामहप्रपितामहानाममुकशर्मणां वसुरुद्रादित्यस्वरूपाणामिदं मोटकासनमस्तु ( शि० सव्येनैव कुशान् गृ० आत्मान्तरात्मपरमात्मनां कुशासनमस्तु)। ॐ भूर्भुवःस्वः इदमासनमास्यताम्। आसे प्र०। सव्येन यवान् गृहीत्वा विश्वान् देवानावाहयेत्। अद्येह अमुकगोत्रब्रह्मीभूतपित्रादित्रयश्राद्धसम्बन्धिनः पुरूरवार्द्रवसंज्ञकान् (आत्मादिश्राद्धसम्बन्धिनः साधुरुरुसंज्ञकान्) विश्वान्देवानावाहयिष्ये इति पृष्ट्वा आवाहयेत्यनुज्ञातः--

ॐ विश्वे देवास आगत शृणुता म इमꣳ हवम्। एदं बर्हिर्निषीदत ॥

इत्यावाह्य यवान् विकीर्य—

ॐ विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उपद्यविष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥ इति जपेत्।

ततोऽपसव्येन तिलान् गृहीत्वा अद्येहामुकगोत्रान् ब्रह्मीभूतास्मत्पितृपितामहप्रपितामहान् अमुकशर्मणो वसुरुद्रादित्यस्वरूपान् ( शि०स०आत्मान्तरात्मपरमात्मनः ) पितॄन् अहमावाहयिष्ये इति पृष्ट्वा आवाहयेत्यनुज्ञातः—

ॐउशन्तस्त्वा निधीमह्युशन्तः समिधीमहि।
उशन्नुशत आवह पितॄन् हविषे अत्तवे ॥

इत्यावाह्य तिलान् ( यवान् ) विकीर्य कृताञ्जलिः—

ॐआयन्तु नः पितरः सोम्यासो
अग्निष्वात्ताः पथिभिर्देवयानैः।

अस्मिन् यज्ञे स्वधया मदन्तो
ऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥

इति पठेत् । ततः सव्येन वैश्वदेविकार्घपात्रं तद्ब्राह्मणसमीपे कुशासने निधाय तत्र "पवित्रे स्थो वैष्णव्यौ" इति पवित्रं निक्षिप्य जलं यवान् गन्धादि च कर्मपात्रोक्तरीत्या निक्षिपेत् । ततः पित्रर्घपात्राणि तद्ब्राह्मणसमीपे आसनेषु प्राक्संस्थानि निधाय तत्र पूर्ववत् सर्वत्र पवित्रं निक्षिप्य जलं तिलान् गन्धादि च कर्मपात्रोक्तरीत्या निक्षिपेत् । ततः पवित्रं वैश्वदेविकब्राह्मणकरे दत्त्वा अर्घपात्रमादाय—

ॐ या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शᳪं स्योनाः सुहवा भवन्तु॥ इति पठित्वा अद्येहामुकगोत्रब्रह्मीभूतपित्रादित्रयश्राद्धसम्बन्धिनः पुरूरवार्द्रवसंज्ञका ( आत्मादिश्राद्धसम्बन्धिनः साधुरुरुसंज्ञकाः ) विश्वेदेवा एष हस्तार्घो वोऽस्तु इत्यर्घं दत्त्वा ब्राह्मणहस्तस्थं पवित्रमर्घपात्रे संस्थाप्य पित्रादिब्राह्मणकरे पित्रर्घपात्रस्थं पवित्रं दत्त्वा अपसव्येन अर्घपात्रमादाय "यादिव्या" इति पठित्वा अमुकगोत्र ब्रह्मीभूतास्मत्पितः अमुकशर्मन् वसुस्वरूप ( शि० स० आत्मन ) एष हस्तार्घस्तेऽस्तु इत्यर्घं दत्त्वा पवित्रमर्घपात्रे संस्थाप्य पितामहप्रपितामहयोरपि ( अन्तरात्मपरमात्मनोरपि ) एवमेव पवित्रदानादिकं विधाय सर्वान् संस्रवान् पित्रर्घपात्रे समवनीय सव्येन मूर्ध्न्यभिषेकं कुर्यात्—

अर्घोदकं श्रियं दद्यात्पुत्रपौत्रादिवर्धनम् ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥

मम कुले दीर्घमायुरस्तु शान्तिरस्तु तुष्टिरस्तु पुष्टिरस्तु वृद्धि-

रस्तु यच्छ्रेयस्तदस्तु—

यत्पापं रोगः शोको दुःखं दारिद्र्यं तद् दूरे प्रतिहतमस्तु इति बहिः। अमृताभिषेकोऽस्तु इति शिरसि। अपसव्येन पितृब्राह्मणवामभागे हस्तमात्रे "ॐशुन्धन्तां लोकाः पितृषदनाः" इति भूमिं जलेनाभ्युक्ष्य "ॐपितृषदनमसि" इति तत्र कुशस्तम्बं निधाय तत्र "ॐपितृभ्यः स्थानमसि" इति तत्पात्रं न्युब्जं कृत्वा तदुपरि स्वधावाचनीयांस्त्रीन् दक्षिणाग्रान् कुशानास्तीर्य आचाराद्गन्धादिभिः पात्रं पूजयेत्।

ततः सव्येन विश्वेषां देवानां "नमोऽस्त्वनन्तायेति गन्धपुष्पधूपदीपवस्त्रादिभिः पूजनं कुर्यात्। हस्ते कुशादिकमादाय अद्येह अमुकगोत्रब्रह्मीभूतास्मत्पित्रादिश्राद्धसम्बन्धिनः पुरूरवार्द्रवसंज्ञका (आत्मादिश्राद्धसंबन्धिनः साधुरुरुसंज्ञकाः) विश्वेदेवा विप्रार्चनविधाविमानि गन्धाक्षतपुष्पधूपदीपतुलसीदलवासोऽलङ्करणादीनि मद्दत्तानि यथाविभागं वः स्वाहा। अपसव्येन पितृब्राह्मणं "पितृभ्यः स्वधायिभ्यः" इति मन्त्रेण (शि०स० आत्मादिब्राह्मणं) गन्धादिभिः सम्पूज्य हस्ते जलमोटकं (जलकुशं) गृहीत्वा अद्येहामुकगोत्राः ब्रह्मीभूतास्मत्पितृपितामहप्रपितामहाः अमुकशर्माणः वसुरुद्रादित्यस्वरूपाः (आत्मान्तरात्मपरमात्मानः) विप्रार्चन० वः स्वधा। विप्रार्चनविधौ सर्वं परिपूर्णमस्तु। अस्तु परिपूर्णम् प्र०। सव्येन विश्वदेवब्राह्मणमपसव्येन पितृब्राह्मणमाचाम्य (शि०स०) सव्येन स्वयमाचामेत्। ततः स्वेष्टदेवतायै विष्णवे नैवेद्यं समर्प्य भस्मना चतुष्कोणमण्डलं विश्वदेवार्थं सव्येन—

यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति।
एवं मण्डलभस्माङ्कः सर्वभूतानि रक्षतु॥

इति मन्त्रेण कृत्वा पित्रर्थमपसव्येन वर्तुलं (शि० स०चतुष्कोणमेव ) कुर्यात् । तदुपरि सव्यापसव्याभ्यां ( शि० स० ) पत्रावली वामभागे जलपात्रे च संस्थाप्याग्नौकरणार्थं घृताक्तमन्नं परिविष्य (शि० अग्नौकरणं न कुर्यात्) पितृब्राह्मणसमीपे एकस्मिन्पात्रे जलं निधाय भोब्राह्मणा युष्मदनुज्ञयाऽग्नौकरणमहं करिष्ये इति पृष्ट्वा कुरुष्वेत्यनुज्ञातः अपसव्येन तस्मिन् जुहुयात् ॐअग्नये कव्यवाहनाय स्वाहा इदमग्नये कव्यवाहनाय न मम ॐसोमाय पितृमते स्वाहा इद९ सोमाय पितृमते न मम इति हुत्वा किञ्चित्पिण्डार्थमवशेषयेत् । ततः सव्येनोभयत्र सोपस्करमन्नं परिविष्य गायत्र्याऽभ्युक्ष्य न्युब्जाभ्यां पाणिभ्यां मधु मधु मधु इति वैश्वेदेविकद्विजपात्रमालभ्य जपति--

ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि स्वाहा-विष्णो हव्य९रक्ष ।"ॐअपहता असुरा रक्षा९सि वेदिषदः" इति यवान् विकीर्य

"ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पा९सुरे" इति द्विजाङ्गुष्ठं निवेशयेत्-इदमन्नमिमा आपः इदमाज्यम् इदं शाकादिकं सर्वं हव्यम् । जलकुशं गृहीत्वा अद्येहामुकगोत्रब्रह्मीभूतास्मत्पित्रादिश्राद्धसंबन्धिभ्यः पुरूरवार्द्रवसंज्ञकेभ्यो (आत्मादिश्राद्धसम्बन्धिभ्यः साधुरुरुसंज्ञकेभ्यः) विश्वेभ्यो देवेभ्यः इदमन्नं सोदकं घृताद्युपस्करसहितं यत्परिविष्टं यत्परिवेक्ष्यमाणं ब्राह्मणस्य तृप्तिपर्याप्तं यथाविभागं वः स्वाहा इति भूमौ जलं क्षिपेत्। सकृदपो दत्त्वा यथासुखेन जुषध्वम्। जुषामहे प्र० ।

"ॐये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सु क्षितौ महिनैकादशस्थ ते देवासो यज्ञमिमं जुषध्वम्"।। इति पठित्वा नमो देवेभ्य इति कुशमुत्सृजेत् ।

पित्रर्थं परिविष्टमन्नं गायत्र्याऽभ्युक्ष्यापसव्येन तिलान् गृहीत्वा उत्तानाभ्यां पाणिभ्यां ( शि०म०यवान्-गृ०न्युब्जाभ्यामेव ) मधुमधुमधु इति पात्रमालभ्य जपति--

ॐ पृथिवी० जुहोमि स्वाहा-विष्णो कव्यᳬ रक्ष । "ॐ अपहता असुरा रक्षाᳬसि वेदिषदः" इति तिलान् ( यवान् ) विकीर्य "इदं विष्णुरिति अङ्गुष्ठग्रहणम्-इदमन्नम् इमा आपः इदमाज्यम् इदं शाकादिकं सर्वं कव्यम् (हव्यम्) । जलमो-दकं ( जलकुशं ) गृहीत्वा अद्येहामुकगोत्रेभ्यः ब्रह्मीभूतास्मत्पि० हेभ्यः अमु० वसुरु० ( आत्मान्तरात्मपरमात्मभ्यः ) इदमन्नं सोदकं० वः स्वधा (स्वाहा) इति भूमौ जलमुत्सृजेत् । सकृदपो दत्वा यथासुखेन जुषध्वम् । जुषामहे म० ।

"ॐये चेह पितरो ये च नेह यांश्च विद्म याँ२ ॥ उच न प्रविद्म । त्वं वेत्थ यति ते जातवेदः स्वधाभि-र्यज्ञᳬसुकृतं जुषस्व" इति पठित्वा नमः पितृभ्यः इति मोदकमुत्सृजेत् । ततः सव्येन प्रणवव्याहृतिपूर्विकां गाय-त्रीं जपित्वा--

ॐमधु व्वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ मधु नक्तमुतोषसो मधुम-त्पार्थिवᳬ रजः । मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँ अस्तुसूर्यः । माध्वीर्गावो भवन्तु नः ॥ ॐमधु३ इति अश्नत्सु पठेत् । सति सम्भवे पितृगीतादिक-मपि पठेत् ।

ततस्तुलसीशर्करागन्धदुग्धादियुतमन्नं पात्रे कृत्वा तस्मिन् कर्मपात्रोदकमग्नौकरणशेषं च संमिश्र्यापसव्येन पिण्डानेकं बलिं च निर्माय (शि०स०) शेषेण नैर्ऋत्यां विकिरदानं कुर्यात् (शि०

विकिरदानं न कुर्यात्)। कुशान् भूमौ संस्थाप्य जलमोटकमादाय श्राद्धदेशाद्बहिर्गत्वा—

असंस्कृतप्रमीतानां त्यागिनां कुलभागिनाम् ।
उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् ॥
इत्यासनं दत्त्वा जलमोटकयुतमन्नमादाय—
अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥
येषां न पचते माता येषां न पचते पिता ।
उच्छिष्टं ये च काङ्क्षन्ति तेभ्योऽन्नं दत्तमक्षयम् ॥

इत्यन्नं विकीर्य आचाराद्गन्धादिभिः पूजयेत् । ततः सव्येन हस्तौ पादौ प्रक्षाल्याचम्य श्राद्धदेशं गत्वा पुनराचामेत् । अपसव्येन पितृब्राह्मणाय चुलुकं दत्त्वा, (शि०स०) सव्येन देवब्राह्मणाय दद्यात् । ततो गायत्रीं मधुवातेति ऋक्त्रयं च जपित्वा भो ब्राह्मणाः अस्मिन् पाकमध्ये यत्किञ्चिद्रोचते तत्प्रतिगृह्यताम् । तृप्ताः स्थ इति पृच्छेत् । तृप्ताः स्मः प्र० । शेषमन्नं किं क्रियताम् कर्ता । इष्टैः सह भुज्यताम् प्र० । ततः पिण्डदानार्थमपसव्येन वेदिकां गोमयोदकेनोपलिप्य (शि० सर्वं सव्येनैव) ॐअपहता असुरा रक्षाᳪंसि वेदिषदः" इति दर्भै रेखां कृत्वा—

ॐये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टान् लोकात् प्रणुदात्यस्मात् ॥ इति नैर्ऋत्यामुल्मुकं निधायोदकस्पर्शं कृत्वा सजलमोटकं गृहीत्वा अद्येहामुकगोत्र ब्रह्मीभूतास्मत्पितः अमुकशर्मन् वसुस्वरूप (आत्मन्) पिण्डासने अवनेनिक्ष्व । एवं पितामह० रुद्र० । प्रपितामह० आदित्यस्वरूप० । (शि० अ-

न्तरात्मन्० । परमात्मन्०) । एवमवनिज्योपमूललूनकुशानास्तीर्य सव्येन—

ईशानविष्णुकमलासनकार्तिकेय-
वह्नित्रयार्करजनीशगणेश्वराणाम् ।
क्रौञ्चामरेन्द्रकलशोद्भवकाश्यपानां
पादान्नमामि शिरसा पितृमुक्तिहेतोः ॥

इति पदानि स्मृत्वा गङ्गागयाकुरुक्षेत्रादितीर्थानि च स्मृत्वा पिण्डे पितृस्वरूपं ध्यात्वा वामजानु निपात्य 'भोब्राह्मणा युष्मदनुज्ञया पिण्डप्रदानमहं करिष्ये' इति पृष्ट्वा ॐकुरुष्वेत्यनुज्ञातः अपसव्यं कृत्वा (शि०स०) मोटक(कुश)तिलजलयुतं पिण्डं गृहीत्वा अद्येह अमुकगोत्र ब्रह्मीभूतास्मत्पितः अमुकशर्मन् वसुस्वरूप (आत्मन्) एषोऽन्नपिण्डोऽमृतस्वरूपो मद्दत्तस्तेऽस्तु इति पिण्डं दत्त्वा—

इयं भूमिर्गयातुल्या इदमुदकं गाङ्गम् (गङ्गाजलतुल्यम्)

अमुकगोत्राय ब्रह्मीभूतायास्मत्पित्रे अमुकशर्मणे वसुस्वरूपायेति (आत्मने इति) पिण्डोपरि जलधारां दद्यात् । एवममुकगोत्र पितामह रुद्र० प्रपितामह आदित्य० (क्रि० अन्तरात्मन्० परमात्मन्)। एवं पिण्डान् दत्त्वा 'लेपभागिनामयं भागोऽस्तु' इति बलिं दद्यात् । ततः सव्येनाचम्य अपसव्यं कृत्वा (शि०स०) पिण्डसम्मुखो भूत्वा "ॐअत्र पितरो मादयध्वं यथाभागमावृषायध्वम्" इति जपित्वा पुष्पाणि संगृह्य अप्रदक्षिणमावृत्योदङ्मुखो भूत्वा श्वासं नियम्य तदवसाने प्रदक्षिणमावृत्य दक्षिणाभिमुखो भूत्वा—

"ॐअमीमदन्त पितरो यथाभागमावृषायिषत"

इति जपित्वा पुष्पाणि पिण्डोपरि क्षिपेत् । ततो जलमोटकं (जल

कुशं) गृहीत्वा अद्येह अमुकगोत्र ब्रह्मीभूतास्मत्पितः अमुकशर्मन् वसुस्वरूप ( आत्मन् ) पिण्डे प्रत्यवनेनिक्ष्व । अस्मत्पितामह० रुद्र० । अस्मत्प्रपितामह० आदित्य० ( अन्तरात्मन्० परमात्मन्० ) । इति पिण्डे प्रत्यवनेजनं कृत्वा नीवीं विस्रंस्य—

"ॐनमो वः पितरो रसाय ॐनमो वः पितरः शोषाय ॐनमो वः पितरो जीवाय ॐनमो वः पितरः स्वधायै ॐनमो वः पितरो घोराय ॐनमो वः पितरो मन्यवे" इति अक्षतग्रहणपूर्वकं षण्नमस्काराञ्जलीन् कृत्वा "ॐएतद्वः पितरो वासः" इति त्रिगुणितं सूत्रं प्रतिपिण्डं दत्त्वा कर्मपात्रस्थजलेन—

ॐऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् ॥ इति पिण्डानामूर्जकरणं कृत्वा सव्येन "देवताभ्य" इति त्रिर्जपित्वा 'भोब्राह्मणा युष्मदनुज्ञया पिण्डार्चनमहं करिष्ये' इति पृष्ट्वा ॐकुरुष्वेत्यनुज्ञातोऽपसव्येन ( शि०स० ) "पितृभ्यः स्वधा"० इति मन्त्रेण पिण्डान् गन्धपुष्पादिभिः सम्पूज्य जलमोटकं ( जलकुशं ) गृहीत्वा अद्येह अमुकगोत्राः ब्रह्मीभूतास्मत्पितृपितामहप्रपितामहाः अमुक० वसुरु० ( आत्मान्तरात्मपरमात्मानः ) पिण्डार्चनविधौ इमानि गन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूलतुलसीदलवासोऽलङ्करणादीनि मदत्तानि वः स्वधा ( स्वाहा ) । पिण्डार्चनविधौ सर्वं परिपूर्णमस्तु । अस्तु परिपूर्णम् इति प्र० । ततः सव्येनाचम्य पिण्डमूले 'सुप्रोक्षितमस्तु' इति प्रोक्ष्य ब्राह्मणयोर्हस्ते क्रमेण 'शिवा आपः सन्तु'—

अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।
ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु मे ॥

इति जलं दद्यात्। सन्तु शिवा आपः प्र०। सौमनस्यमस्तु-

लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे।
लक्ष्मीर्वसति गोष्ठे च सौमनस्यं सदाऽस्तुमे॥

इति पुष्पं दद्यात्। अस्तु सौमनस्यम् प्र०। अक्षतं चारिष्टं चास्तु-

अक्षतं चास्तु मे नित्यं शान्तिदं पुष्टिदं तथा।
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम॥

इत्यक्षतान्दद्यात्। अस्त्वक्षतमरिष्टं च प्र०। कर्मपात्रोदकेन मूर्धाभिषेकः। मम कुले दीर्घमायुरस्तु शान्तिरस्तु पुष्टिरस्तु वृद्धिरस्तु यच्छ्रेयस्तदस्तु—

यत्पापं रोगः शोको दुःखं दारिद्र्यं तद् दूरे प्रतिहतमस्तु इति बहिः। अमृताभिषेकोऽस्तु इति शिरस्यभिषेकं कुर्यात्। ततोऽपसव्येन जलमोटकं (शि०स०जलकुशं) गृहीत्वा अद्येहामुकगोत्रस्य ब्रह्मीभूतास्मत्पितुरमुकशर्मणो वसुस्वरूपस्य (आत्मनः) पार्वणश्राद्धे इदमन्नोदकादि यद्दत्तं तदक्षय्यमस्तु इति पिण्डोपरि जलं ब्राह्मणहस्ते मोटकं दद्यात्। अस्त्वक्षय्यमिति प्रत्युक्तिः। एवं पितामहस्य रुद्र०। प्रपितामहस्य आदित्यस्व० (अन्तरात्मनः० परमात्मनः०)। ततः सव्येनाशीर्ग्रहणम्-अघोराः पितरः सन्तु२। गोत्रं नो वर्धताम् २। दातारोभिवर्धन्ताम् २। वेदा वर्धन्ताम् २। सन्ततिर्वर्धताम् २। श्रद्धा च नो मा व्यगमत्। मागात्। बहुदेयं च नोऽस्तु अस्तु। अन्नं च नो बहु भवेत् भवतु। अतिथींश्च लभेमहि लभध्वम्। याचितारश्च नः सन्तु२। मास्म याचिष्म कञ्चन मा याचध्वम्। एता एवाशिषः सत्याः सन्तु २। अपसव्येन (शि०स०) न्युब्जपात्रोपरि स्थापितान् स्वधावाचनीयान् दर्भान् गृहीत्वा पिण्डपश्चिमतो दक्षिणाग्रान् निधाय तेष्वपो

निषिञ्चेत् । सव्येन 'भोब्राह्मणा युष्मदनुज्ञया स्वधां वाचयिष्ये'। वाच्यतामित्यनुज्ञातोऽपसव्येन (शि०स०) अद्येहामुकगोत्रेभ्यो ब्रह्मीभूतेभ्योऽस्मत्पितृभ्योऽमुकशर्मभ्यो वसुस्वरूपेभ्यो (आत्मभ्यः) ब्राह्मणा मधुमधु स्वधोच्यताम् पिण्डोपरि मोटकं ( कुशं ) ब्राह्मणहस्ते जलम् । अस्तु स्वधा प्र० । एवं पितामहेभ्यः रुद्र० । प्रपितामहेभ्यः आदित्य० (अन्तरात्मभ्यः० परमात्मभ्यः०) । ततो दुग्धेनोर्जकरणम् "ऊर्जंवहन्तीरिति । न्युब्जीकृतमर्घपात्रमुत्तानं कृत्वा सव्येन दक्षिणासङ्कल्पः । देयद्रव्यं सम्प्रोक्ष्य सम्पूज्य हस्ते जलमोटकं (जलकुशं) गृहीत्वा देशकालौ सङ्कीर्त्यामुकगोत्राणां ब्रह्मीभूतास्मत्पितृपितामहप्रपितामहानाममुकशर्मणां वसुरुद्रादित्यस्वरूपाणाम् ( आत्मान्तरात्मपरमात्मनाम् ) अक्षयतृप्तिकामनया कृतस्य विश्वदेवपूर्वकपार्वणश्राद्धकर्मणः साङ्गतासिद्ध्यर्थमिमां रजतदक्षिणां ब्राह्मणाय दास्ये तथा अमुकगोत्रब्रह्मीभूतास्मत्पित्रादिश्राद्धसम्बन्धिनां पुरूरवार्द्रवसं० (आत्मान्तरात्मपरमात्मसम्बन्धिनां साधुरुरुसंज्ञकानां) विश्वेषान्देवानां प्रीतये इमां सुवर्णनिष्क्रयिणीं दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् न मम ।

स्वतिलकम्—

नित्यानुष्ठानसम्पन्नाः सर्वदा यज्ञबुद्धयः ।
पितृमातृपराश्चैव सन्त्वस्मत्कुलजा नराः ॥ इति ।

विशेषपूजनम्—

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं नृणां प्रीताः पितामहाः ॥
आयुः पुत्रान् यशः स्वर्गं कीर्तिं पुष्टिं बलं श्रियम् ।
पशून् सुखं धनं धान्यं प्राप्नुयां पितृपूजनात् ॥ इति ।

ततोऽपसव्येन ( शि०स० ) पैतामहपिण्डमुत्थाप्य पात्रे

निधाय सव्येनावघ्राय पिण्डस्थाने शङ्खचक्रे लिखित्वा तत्र दीपं प्रज्वलय्य तत्र ॐवसन्ताय नमः। ॐग्रीष्माय नमः। ॐवर्षाभ्यो नमः। ॐशरदे नमः। ॐहेमन्ताय नमः। ॐशिशिराय नमः। इति षडृतून् संपूज्य दीपस्थाने दीपं निधाय अपसव्येन (शि० स०) पिण्डस्थाने पिण्डं निदध्यात्। ततः पिण्डोपरि तर्पणं--

यः कश्चित् पितृरूपेण तिष्ठते परमेश्वरः।
सोऽयं श्राद्धप्रदानेन तृप्तिं लभतु शाश्वतीम्॥
गयायां पिण्डदानेन स्वयमेको जनार्दनः।
यं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्॥
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः।
यत्र यत्र स्मरिष्यामि पितॄणां दत्तमक्षयम्॥
शमीपत्रप्रमाणेन पिण्डं दद्यात् गयाशिरे।
उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतम्॥
पितुः शतगुणं पुण्यं सहस्रं मातुरुच्यते।
भगिन्यां शतसाहस्रं सोदर्ये दत्तमक्षयम्॥ इति।

हस्ते जलं गृहीत्वा अद्य दिनेऽपरमपि आमं पक्कं हिरण्यादिकमुदयमारभ्यास्तपर्यन्तं यद्दत्तं यच्च दास्ये तत्स्वर्गद्वारेऽमृतीभूय पितृभ्यस्तिष्ठतु इति विसृजेत्। सव्येन देवताभ्य इति त्रिर्जपः। सप्तव्याधा इति पठित्वा 'पार्वणश्राद्धं विसर्जये' इत्युक्त्वा एतच्छ्राद्धं विधिहीनं देशहीनं कालहीनं श्रद्धाहीनं द्रव्यहीनं यत्कृतं तत्सुकृतमस्तु यन्न कृतं तत् श्रीविष्णोः प्रसादाद् ब्राह्मणवचनात्सर्वं परिपूर्णमस्तु इति पूर्णतां प्रार्थयेत्। अस्तु परिपूर्णमिति विप्राः। स्वस्ति भवन्तो ब्रुवन्तु इति दक्षिणास्वीकारं कारयेत्। ॐस्वस्ति प्र०। भोजनपात्राणि चालयित्वा संचरमभ्युक्ष्य वि-

सर्जयेत् । तत्र पूर्वं सव्येन पितृब्राह्मणं कुशाग्रेण स्पृशन्—

ॐउत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥

वाजेवाजे ऽवत व्वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ इति पितॄन् विसृज्य पश्चाद्देवांश्च अनेनैव विसृज्य कर्मपात्रं हस्ते गृहीत्वा—

ॐआमा व्वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे । आमागन्तां पितरामातरा चामा सोमोऽमृतत्वेन गम्यात् ॥

इति प्रदक्षिणीकृत्य जलधारां दत्त्वा कर्मपात्रं विप्रपादाभ्यां निनयेत् ।

यान्तु पितृगणाः सर्वे यतः स्थानादुपागताः ।
सर्वे ते हृष्टमनसः सर्वान् कामान् ददन्तु मे ॥
ये लोका दानशीलानां ये लोकाः पुण्यकर्मणाम् ।
संपूर्णान् सर्वभोगैस्तु तान् व्रजध्वं सुपुष्कलान् ॥
इहास्माकं शिवं शान्तिरायुरारोग्यसंपदः ।
वृद्धिः सन्तानवर्गस्य जायतामुत्तरोत्तरा ॥
अद्य मे सफलं जन्म भवत्पादाभिवन्दनात् ।
अद्य मे गोत्रजाः सर्वे गता वोऽनुग्रहाद्दिवम् ॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः ।
तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः ।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतां मम ॥

इति प्रार्थयेत् । ततः—

ॐमुञ्चन्तु मा शपथ्यादथो वरुण्यादुत । अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥

इति शिखामुन्मुच्य—

ॐत्रीन् समुद्रान् समसृपत्स्वर्गानपाम्पतिर्वृषभ इष्टकानाम् । पुरीषं वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेताः ॥ इति कुशान् विसृजेत् । ततो हस्तेन दीपप्रशमनं विधाय सव्येनाचम्य यस्यस्मृत्येत्यादि पठेत् ।

इति यतेरेकादशाहपार्वणश्राद्धप्रयोगः ।

अनेनैव विधिना प्रतिसंवत्सरं सिद्धितिथौ पुत्रेण पार्वणं कार्यम् ।

मैथिलास्तु प्रतिसंवत्सरं सिद्धितिथावेकोद्दिष्टमेव कार्यम् । निषेधस्तु प्रेतत्वनिमित्तकैकोद्दिष्टस्यैवेति वदन्ति ।

दर्शादौ त्वेकतन्त्रेण मातामहपार्वणेन सह षड्दैवतं श्राद्धं कार्यम् , अन्वष्टकासु नवदैवतम् , गयायां द्वादशदैवतम् इति विशेषः ।

## अथ द्वादशाहे नारायणबलिः ।

तत्प्रकारमाह बौधायनः—

नारायणबलिश्चास्य कर्तव्यो द्वादशेऽहनि ।
कृत्वा विष्णोर्महापूजां पायसं च निवेदयेत् ॥
अग्नौ हुत्वा तु तच्छेषं व्याहृतीभिः समाहितः ।
यतीन् गृहस्थान् साधून् वा निमन्त्र्य द्वादशावरान् ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्मन्त्रैर्द्वादशनामभिः ।
सम्भोज्य हव्येनान्नेन दक्षिणां च निवेदयेत् ॥
त्रयोदशं द्विजश्रेष्ठमात्मसंस्थं जितेन्द्रियम् ।
विष्णुं यथा तथाऽभ्यर्च्य पाद्याद्यैश्च विधानतः ॥

दद्यात्पुरुषसूक्तेन पुष्पहव्यादिकं क्रमात् ।
वस्त्रालंकरणादीनि यथाशक्ति प्रदापयेत् ॥
उच्छिष्टसन्निधौ तस्य दर्भानास्तीर्य भूतले ।
भूर्भुवःस्वः स्वधायुक्तैस्तस्मै दद्याद्बलित्रयम् ॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
यत्फलं तल्लभेदेवं यः करोति यतिक्रियाम् ॥ इति ।

निमित्तान्याह शौनकः—

शौनकोऽहं प्रवक्ष्यामि नारायणबलिं परम् ।
चाण्डालादुदकात्सर्पाद् ब्राह्मणाद्वैद्युतादपि ॥
दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषाश्मभिः ।
देशान्तरे मृतानां च मृतानां चान्यसाधनैः ॥
जीवच्छ्राद्धमृतानां च कनिष्ठानां तथैवच ।
यतीनां योगिनां पुंसामन्येषां मोक्षकाङ्क्षिणाम् ॥
पूर्वपापक्षयार्थाय द्वादशेऽहनि कारयेत् ।
द्वादश्यां श्रवणेऽब्दान्ते पञ्चम्यां पर्वणोस्तु वा ॥ इति ।
यमः—हंसे मृते सुतः कुर्यात्पार्वणं पितृयज्ञवत् ।
नारायणबलिं चैव तथा परमहंसके ॥
विष्णुं सम्पूज्य विधिवद्दत्त्वाऽर्घ्यं बलिमुत्तमम् ।
चरुं हुत्वा तु सूक्तेन पौरुषेण तु षोडश ॥
केशवाद्यैर्द्वादशभिर्नामभिर्जुहुयात्तथा ।
द्वादश ब्राह्मणा भोज्या विष्ण्वर्थे तु त्रयोदशः ॥
पूर्वपक्षे केशवाद्याः कृष्णे सङ्कर्षणादयः ।
एवं कृते विधानेन नारायणबलौ द्विजः ॥
विष्णुलोकमवाप्नोति पुरुषो नात्र संशयः । इति ।

अथैतदनुसारी प्रयोगः ।

कर्ता पुत्रादिर्द्वादशाहे स्नात्वा कृतनित्यक्रियः सति सम्भवे ऽहते धौते वा वाससी परिधाय स्वासने प्राङ्मुख उदङ्मुखो वोपविश्य दीपं प्रज्वाल्याचम्य प्राणानायम्य "यंब्रह्मवेदान्तविद" इति "शुक्लाम्बरधरम्" इति च पठित्वा पुष्पाञ्जलिं समर्प्य दक्षिणहस्ते कुशयवजलान्यादाय देशकालौ सङ्कीर्त्य सिद्धिं गतस्य भिक्षोः सम्भावितसर्वपापक्षयपूर्वकं विष्णुलोकावाप्तिद्वारा श्रीनारायणप्रीत्यर्थं नारायणबलिं करिष्ये इति सङ्कल्प्य त्रयोदश कुशमयान् ब्राह्मणान् सम्पाद्य तैलाभ्यङ्गपूर्वकं संस्नाप्य "एतं ते" इति पठित्वा—

शुक्ले सिद्धिं गतश्चेत् 'केशवादिद्वादशसम्बन्धिनो ब्राह्मणाः महाविष्णुसम्बन्धी च ब्राह्मणः सुप्रतिष्ठिता वरदा भवन्तु'

कृष्णे सिद्धिं गतश्चेत् 'सङ्कर्षणादिद्वादशसम्बन्धिनो ब्राह्मणाः महाविष्णुसम्बन्धी च ब्राह्मणः सुप्रतिष्ठिता०' इति प्रतिष्ठापयेत् । ततस्तान् कुशबटून् पूर्वदृब्ध्या उत्तरदृब्ध्या वा क्रमेण स्थापयेत् । शुक्लपक्षे सिद्धिं गतस्य केशवरूपगुर्वर्थे—

"भवान् मया निमन्त्रितः" ।

नारायणरूपगुर्वर्थे भ० । माधवरूपगुर्वर्थे भवान्० । गोविन्दरूप० । विष्णु० । मधुसूदन० । त्रिविक्रम० । वामन० । श्रीधर० । हृषीकेश० । पद्मनाभ० । दामोदर० । महाविष्णुरूपगुर्वर्थे भवान्० । इति निमन्त्रयेत् ।

कृष्णपक्षे सिद्धिं गतस्य सङ्कर्षणरूपगुर्वर्थे भवान्० । वासुदेव० । प्रद्युम्न० । अनिरुद्ध० । पुरुषोत्तम० । अधोक्षज० । नारसिंह० । अच्युत० । जनार्दन० । उपेन्द्र० । हरि० । श्रीकृष्ण० । महाविष्णु० । इति निमन्त्रयेत् । निमन्त्रितोऽस्मि इति

प्रत्युक्तिः सर्वत्र ।

ततो विप्रसन्निधौ स्वाग्रे स्थण्डिलं विधाय परिसमूहनादि-वह्निस्थापनान्तं कर्म कृत्वा द्रव्यदेवताभिध्यानं कुर्यात्-हस्ते जलं गृहीत्वा अद्येह नारायणबलिकर्मणाऽहं यक्ष्ये-तत्र प्रजापतिम् इन्द्रम् अग्निं सोमम् आज्येन,

अग्निं वायुं सूर्यं प्रजापतिं व्यस्तसमस्ताभिर्व्याहृतिभिरेकैकया पायसाहुत्या, विष्णुं "विष्णोर्नुकम्" इति चतसृभिः प्रतिकण्डिकमेकैकया पायसाहुत्या, पुरुषं पुरुषसूक्तेन प्रत्यृचमेकैकया पायसाहुत्या,

शुक्लपक्षे सिद्धिं गतश्चेत् केशवादिद्वादशदेवता नाममन्त्रेणैकैकया पायसाहुत्या—

कृष्णपक्षे सिद्धिं गतश्चेत् संकर्षणादिद्वादशदेवता एकैकया पायसाहुत्या,

शेषेणाग्निं स्विष्टकृतं, महाव्याहृतिदेवताः सर्वप्रायश्चित्तदेवताः प्रजापतिंचाज्येनाहं यक्ष्ये इति । ततो ब्रह्माणं वृत्वा क्षीरं जलं च प्रणीतापात्रे मध्ये सेतुबन्धेन मूलेऽग्रेच क्रमेण निधाय परिस्तरणादि आज्याधिश्रयणान्तं कर्म कृत्वा अधिश्रयणपूर्वकं चरुं श्रपयित्वा पर्यग्निकरणादि पर्युक्षणान्तं कर्म कृत्वाऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निधायाग्निं संपूज्याघारावाज्यभागौ च हुत्वाऽग्नेः पुरतः शालिग्रामे विष्णुं पुरुषसूक्तेन 'ॐनमो नारायणाय'इति सहितयैकैकयर्चा षोडशोपचारैरभ्यर्च्य

ॐभूः स्वाहा-इदमग्नये० । ॐभुवः स्वाहा-इदं वायवे० । ॐस्वः स्वाहा-इदꣳ सूर्याय० । ॐभूर्भुवःस्वः स्वाहा-इदं प्रजापतये० इति पायसेन हुत्वा-

ॐविष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि

विममे रजाᳪंसि। यो अस्कभायदुत्तरᳪं सधस्थं विच- क्रमाणस्त्रेधोरुगायः॥ विष्णवे त्वा-स्वाहा १ (य० सं० ५-१८) इदं विष्णवे०। ॐदिवो वा विष्ण उत वा पृ- थिव्या महो वा विष्ण उरोरन्तरिक्षात्। उभा हि ह- स्ता वसुना पृणस्वाप्रयच्छ दक्षिणादोत सव्यात्॥ वि- ष्णवे त्वा-स्वाहा २ (य०सं० ५-१९)। इदं विष्णवे०।

ॐप्रतद्विष्णु स्तवते वीर्येण मृगो न भीमः कुच- रो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा-स्वाहा-३ (य० सं० ५-२०)। इदं विष्णवे०।

ॐविष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि। वैष्णवमसि विष्णवे त्वा- स्वाहा-४ (य०सं०५-२१) इदं विष्णवे०।

पुरुषसूक्तस्यैकैकया स्वाहान्तया ऋचा 'इदं पुरुषाय न म- म'इतित्यागपूर्वकं पायसेन हुत्वा-

शुक्लपक्षे सिद्धिं गतश्चेत्-ॐकेशवाय स्वाहा-इदं केशवाय०। नारायणाय०। माधवाय०। गोविन्दाय०। विष्णवे०। मधु- सूदनाय०। त्रिविक्रमाय०। वामनाय०। श्रीधराय०। हृषी- केशाय०। पद्मनाभाय०। दामोदराय०।

कृष्णपक्षे सिद्धिं गतश्चेत्-ॐसंकर्षणाय स्वाहा इदं संकर्ष- णाय०। वासुदेवाय०। प्रद्युम्नाय०। अनिरुद्धाय०। पुरुषो- त्तमाय०। अधोक्षजाय०। नारसिंहाय०। अच्युताय०। जना- र्दनाय०। उपेन्द्राय०। हरये०। श्रीकृष्णाय स्वाहा इदं श्री- कृष्णाय०। इति पायसेन हुत्वा-

ॐअग्नये स्विष्टकृते स्वाहा-इदमग्नये स्विष्टकृते न मम इति

पायसेन हुत्वा भूराद्या नवाहुतीराज्येन जुहुयात् । ततः संस्रवप्राशनादिप्रणीताविमोकान्तं कृत्वा पुनर्विष्णुं शालिग्रामे नाममन्त्रेण पञ्चोपचारैः संपूज्यार्घपात्रे गन्धपुष्पतुलसीदलफलानि प्रक्षिप्य—

ॐनारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ विष्णवे नमः इममर्घ्यं समर्पयामि इत्यर्घ्यं दत्त्वा हुतशेषपायसेनानयैव गायत्र्या विष्णवे इमं बलिं समर्पयामि इति बलिं समर्प्य निमन्त्रितद्वादशब्राह्मणान् शुक्ले केशवादिक्रमेण, कृष्णे संकर्षणादिक्रमेण 'केशवरूपगुरो इदमासनं ते नमः' इत्यादिना प्रयोगेणासनार्घ्यगन्धपुष्पतुलसीपत्रधूपदीपफलवस्त्रयज्ञोपवीतैः संपूज्य त्रयोदशं विभाज्यं पुरुषसूक्तेन प्रत्यृचमन्ते 'विष्णवे नमः' इत्येवमावाहनादिदीपान्तैरुपचारैरभ्यर्च्य सर्वेषामग्रे जलेन चतुरस्राणि मण्डलानि कृत्वा तेषु भोजनपात्राण्यासाद्य घृतेनोपस्तीर्य पायसादिभोज्यद्रव्यं पात्रेषु परिविष्य पात्रस्थमन्नं सावित्र्या प्रतिपात्रमावृत्तया प्रोक्ष्य प्रतिपात्रसमीपे प्राङ्मुख उदङ्मुखो वोपविश्य सव्यहस्तेन पात्रमालभ्य दक्षिणहस्ते कुशयवजलान्यादाय 'ॐकेशवरूपगुरो इदमन्नं सोपस्करं यत्परिविष्टं परिवेक्ष्यमाणं तृप्तिक्षममृतस्वरूपं ते स्वाहा' इति भूमौ जलमुत्सृजेत् ।

एवं नारायणादिविष्ण्वन्तानां पात्रस्थमन्नमुत्सृजेत् शुक्लपक्षे सिद्धिं गतश्चेत् ।

कृष्णपक्षे सिद्धिं गतश्चेत्संकर्षणाद्युद्देशेन ।

"विष्णोर्नुकम्" इति चतस्रः पूर्वोक्ताः कण्डिकाः,

ॐविष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ १ ॥ तद्विष्णोः परमं पदꣳसदा

पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ २ ॥ (य०सं०६-४,५) त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ १ ॥ तद्विप्रासो विपन्यवो जागृवांऽसः समिन्धते । विष्णोर्यत्परमं पदम् ॥२॥ (य०सं०३४-४३, ४४) ॐतदेवाग्निः ॐतदादित्यः ॐतद्वायुः ॐतदु चन्द्रमाः ॐतदेव शुक्रं ॐतद् ब्रह्म ॐता आपः ॐस प्रजापतिः इति जपेत् । ततः-

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥

इति जलमुत्सृज्यापोशानम् "ॐअमृतोपस्तरणमसि स्वाहा" इति दत्त्वा "नाभ्या आसीत्" इति अपोशानग्रहणकाले पठेत् । ततः प्राणाहुत्यन्ते अपेक्षितमिति प्रार्थ्य उपानिषद्भागान् पठेत् । 'तृप्ताः स्थ' इति पृष्ट्वा 'तृप्ताः स्मः' इति प्रत्युक्ते उत्तरापोशानम् "ॐअमृतापिधानमसि स्वाहा" इति दद्यात् । तत आचान्तेषूपविष्टेषु महाविष्णवर्थस्य त्रयोदशविप्रस्य उच्छिष्टसन्निधौ प्राङ्मुख उदङ्मुखो वोपविश्य स्वाग्रभूमिं गोमयेनोपलिप्य तत्र प्रागग्रानुदगग्रान्वा दर्भानास्तीर्य तेषु 'ॐनमो नारायणाय' इति मन्त्रेण द्वादशस्थानेषु प्राक्संस्थमुदक्संस्थं वाऽक्षतोदकं दत्त्वा तेषु शेषपायसेन—

शुक्ले केशवादिद्वादशनामभिः कृष्णे सङ्कर्षणादिनामभिः,

'केशवरूपगुरो एष ते पिण्डः स्वाहा न मम' इत्यादिप्रयोगेण गुरवे द्वादश पिण्डान् दद्यात् । ततः पूर्ववत्पिण्डानामुपरि अक्षतोदकं दत्त्वा पिण्डेषु विष्णुं गन्धपुष्पधूपदीपफलताम्बूलदाक्षिणाभिः सम्पूज्य पुरुषसूक्तेन स्तुत्वा नमस्कृत्य पिण्डान् विसर्जयेत् ।

ततः केशवादिस्थानीयद्वादशविप्रेभ्यः ताम्बूलं दक्षिणां च दत्त्वा विष्णुस्थानीयाय विप्राय 'यत्पुरुषेण' इति ताम्बूलं

'सप्तास्यासन्' इति द्विगुणां दक्षिणां दत्त्वा 'यज्ञेन यज्ञम्' इति-मन्त्रान्ते 'विष्णुरूपगुरो एष पुष्पाञ्जलिस्ते नमः' इति पुष्पाञ्जलिं दद्यात् । ततः सर्वान् प्रदक्षिणीकृत्य नमस्कृत्य हर्षपुरःसरमनुव्रज्य विसर्जयेत्—'मया यः कृतो नारायणबलिः तन्मध्ये न्यूनातिरिक्तो यो विधिः स नारायणप्रसादाद्ब्राह्मण-वचनाच्च परिपूर्णोऽस्तु' इति प्रार्थयेच्च । अस्तु परिपूर्ण इति विप्रा वदेयुः ।

ततः 'कायेन वाचा'इत्यादिना कृतं कर्म नारायणाय समर्प्य यस्यस्मृत्येति पठित्वा विष्णुं संस्मृत्य गवादिभ्यो बलिं दत्त्वा सुहृद्युतो भुञ्जीत । नारायणबलिकाले पूजितां शालिग्रामशिलामाचार्याय दद्यादित्याचारः ।

इति नारायणबलिप्रयोगः ।

अथाराधनम् ।

तत्प्रकारो नागरखण्डे—

द्वादशाहे मृताहे च आराधनमथाचरेत् ।
श्रीगुरुं तद्गुरुं चैव परमेष्ठिगुरुं तथा ॥
परात्परगुरुं चैव केशवादीन् स्वनामभिः ।
गुर्वर्थे चतुरो विप्रान् केशवादीन् स्वशक्तितः ॥
सम्पूज्य भोजयेदन्नैः सघृतव्यञ्जनादिभिः ।
द्वादश्यामथवा शुक्ले सम्यगाराधनं चरेत् ॥ इति ।
मृताहे चेति चकारात्प्रतिमासं मृततिथावासंवत्सरात् ।
सङ्ग्रहे—'यतौ मृते तु वपनं पार्वणं विष्णुपूजनम् ।
प्रत्यब्दं प्रतिमासं च कुर्यादाराधनं बुधः ॥

एतेन प्रत्यब्दमपि मृततिथावाराधनं सिद्ध्यति । त्रयोदशाह-कालो वचने यद्यपि नोपलभ्यते तथापि शिष्टाचारसिद्धो ज्ञातव्यः ।

## अथाराधनप्रयोगः ।

तत्र गुर्वादिचतुष्टयस्थाने एकैको विप्रः केशवादिस्थानेषु प्रतिस्थानमेक इति षोडश विप्राः । केशवादीनामेक एवेति पञ्चैव वा विप्राः ।

कृतमध्याह्नक्रियः कर्ता स्वासने प्राङ्मुख उदङ्मुखो वोपविश्य दीपं प्रज्वलय्याचम्य पवित्रपाणिः प्राणानायम्य पञ्चायतनपुटं संस्थाप्य गणेशविष्ण्वादिस्मरणं कृत्वा हस्ते कुशादिकमादाय देशकालौ सङ्कीर्त्य ब्रह्मीभूतस्य गुरोर्नारायणप्रीत्यर्थमाराधनं करिष्ये इति सङ्कल्प्य षोडश पञ्च वा ब्राह्मणान् कुशमयान् सम्पाद्य संस्नाप्य "एतन्ते" इति पठित्वा प्रतिष्ठाप्य प्राङ्मुखानुदङ्मुखान् वा यथावकाशमुपवेश्य स्वयं तदग्रे प्राङ्मुख उदङ्मुखो वा पातितदक्षिणजानुरुपविश्य 'ब्रह्मीभूतस्य गुरोः समाराधने गुर्वर्थे भवान् निमन्त्रितः' परमगुर्वर्थे भवान्०, परमेष्ठिगुर्वर्थे भवान्०, परात्परगुर्वर्थे भवान् निमन्त्रितः, एवं चतुरो ब्राह्मणान् निमन्त्र्य—

शुक्ले सिद्धिं गतश्चेत् केशवार्थे भवान्० नारायणार्थे० माधवार्थे० गोविन्दा० विष्ण्वर्थे० मधुसूदनार्थे० त्रिविक्रमार्थे० वामनार्थे० श्रीधरार्थे० हृषीकेशार्थे० पद्मनाभार्थे० दामोदरार्थे० इति द्वादश ब्राह्मणान् निमन्त्रयेत् ।

पञ्चब्राह्मणपक्षे 'केशवादिदामोदरान्तद्वादशार्थे भवान् निमन्त्रित' इत्येकमेव निमन्त्रयेत् ।

कृष्णपक्षे सिद्धिं गतश्चेत् सङ्कर्षणार्थे० वासुदेवार्थे० प्रद्युम्नार्थे० अनिरुद्धार्थे० पुरुषोत्तमार्थे० अधोक्षजार्थे० नारसिंहार्थे० अच्युतार्थे० जनार्दनार्थे० उपेन्द्रार्थे० हर्यर्थे० श्रीकृष्णार्थे० इति द्वादश, सङ्कर्षणाद्यर्थे एकमेव वा निमन्त्रयेत् । अथवा ब्राह्मणानां

स्थाने यतीन् निमन्त्रयेत्। निमन्त्रितोऽस्मि इति प्रत्युक्तिः। ततो गन्धकर्पूरमिश्रजलेन तेषां पादप्रक्षालनं कृत्वा तानाचाम्य स्वयं चाचम्य पादप्रक्षालनोदकं पात्रान्तरे गृहीत्वा तत्पादान् साक्षतगन्धपुष्पतुलसीदलैः पूजयित्वा—

आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधरूपम्।
योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि॥

इति नमस्कुर्यात्। एवं पादपूजनं कृत्वा पादप्रक्षालनोदकपात्रं गन्धादिभिरलङ्कृत्य देवसन्निधौ आधारे स्थापयेत्। ततः कुशासनेषु प्राङ्मुखानुदङ्मुखान्वा ब्राह्मणान् उपवेश्य पुरुषसूक्तेन प्रत्यृचं 'ॐ नमो नारायणाय' इतिमन्त्रसहितेनावाहनादिषोडशोपचारैः पञ्चोपचारैर्वा पदार्थानुसमयेन पूजयेत्। ततः सर्वेषां पुरतश्चतुरस्रमण्डलानि कृत्वा तेषु पत्रावलीः संस्थाप्य घृतेनोपस्तीर्य पायसादिविशिष्टद्रव्यं साज्यं व्यञ्जनसहितं च परिविष्य सर्वेषां सन्निधौ जलपात्रं च निधाय गायत्र्या प्रतिपात्रमावृत्त्या प्रोक्ष्य सव्यहस्तेन पात्रमालभ्य दक्षिणहस्ते कुशयवजलान्यादाय 'अद्येह ब्रह्मीभूताय गुरवे इदमन्नं सोपस्करं परिविष्टं परिवेक्ष्यमाणं च तृप्तिक्षमं ते नमः' इति भूमौ जलं क्षिपेत्। एवं परमगुर्वाद्यर्थेऽन्नमुत्सृजेत्। ततो हस्ते जलं गृहीत्वा—

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः।
त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः॥

अनेन गुर्वाद्याराधनेन भगवान् नारायणः प्रीयताम् इति भूमौ जलं क्षिपेत्। ॐ अमृतोपस्तरणमसि इति सर्वेषामपोशानं दद्यात्। भुञ्जानेषु ब्राह्मणेषु ईशावास्याद्युपनिषन्मन्त्रान् यथासम्भवं तान् श्रावयेत्। तृप्तेषु ॐ अमृतापिधानमसि इत्यपोशानं दत्त्वा आचान्तेषु विशिष्टताम्बूलवस्त्रदक्षिणादिभिरभ्यर्चयेत्। तत उ-

पविष्टेष्वेत्र तेषु हस्ते जलं गृहीत्वा 'गुर्वाराधनाङ्गभूतं तीर्थपूजनमहं करिष्ये' इति सङ्कल्प्य गोमयेन चतुरस्रमुपलिप्य रङ्गवल्ल्यादिभिरलङ्कृत्य तत्र धान्यं प्रक्षिप्य तदुपरि देवसन्निधौ पूर्वं स्थापितं पादोदककलशं संस्थाप्य तत्र गङ्गादितीर्थानि भावयित्वा पुरुषसूक्तेन प्रत्यृचम् 'ॐ तीर्थराजाय नमः' इत्यनेन च षोडशोपचारैः पञ्चोपचारैर्वाऽभ्यर्च्य तत्पात्रं शिरसि धृत्वा यथाशक्ति उपनिषत्खण्डानि जपित्वा—

'श्रीकृष्ण गोविन्द हरे मुरारे हे नाथ नारायण वासुदेव'

इति कीर्तनपुरःसरं सहर्षं नृत्यं कृत्वा तत्पात्रं पुनर्मण्डले संस्थाप्य पूजाऽवशिष्टानि गन्धादीनि बन्धुभिः सह ललाटादौ धृत्वा विप्रान् प्रदक्षिणीकृत्य 'आनन्दमानन्दकरमिति 'गुरुर्ब्रह्मा' इति च द्विजांस्तीर्थराजं च नमस्कृत्य गुर्वर्थविप्रहस्ते पादोदकपात्रं दत्त्वा तद्धस्तात्तीर्थं गृहीत्वा—

अविद्यामूलशमनं सर्वपापप्रणाशनम् ।
गुरोः पादोदकं तीर्थं पिबामि भवनाशनम् ॥

इति पिबेत् । पुत्रादिकामनायाम्—

शोषणं पापपङ्कस्य दीपनं ज्ञानतेजसः ।
गुरोः पादोदकं तीर्थं पुत्रपौत्रप्रवर्धनम् ॥

इति पिबेत् । ततस्तानन्यांश्च ब्राह्मणान् दक्षिणाभिः सन्तोष्य सम्मानपुरःसरंताननुव्रज्य 'अनेन ब्रह्मीभूतस्य गुरोः समाराधनेन श्री भगवान् नारायणः प्रीयतां न मम' इतीश्वरार्पणं कृत्वा सुहृद्युतो भुञ्जीत । एवं प्रतिमासं प्रत्यब्दं चाराधनं सिद्धितिथौ कार्यम् । प्रत्यब्दं च पार्वणोत्तरम् । इत्थंकरणाशक्तौ यथाशक्ति ब्राह्मणानाहूय पादप्रक्षालनपूर्वकं गन्धादिभिरभ्यर्च्य भोजयेत् ।

इति यत्याराधनप्रयोगः ।

अथाशौचकालः प्रसङ्गात् संक्षेपेण निर्णीयते ।

तच्चाशौचं सपिण्डानां दशाहं, सोदकानां त्रिरात्रं, सगोत्राणामेकरात्रम् ।

मूलपुरुषमारभ्य सप्तमपर्यन्तं सपिण्डाः, अष्टममारभ्य चतुर्दशपुरुषपर्यन्तं सोदकाः, पञ्चदशमारभ्य एकविंशतिपर्यन्तं सगोत्राः ।

पित्रादयस्त्रयश्चैव तथा तत्पूर्वजास्त्रयः ।
सप्तमः स्यात्स्वयं चैव तत्सापिण्ड्यं बुधैः स्मृतम् ॥
सापिण्ड्यं सोदकं चैव सगोत्रं तच्च वै क्रमात् ।
एकैकं सप्तकं चैवं सापिण्ड्यादि उदाहृतम् ॥

इति लघ्वाश्वलायनस्मृतेः,

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
जननेऽप्येवमेव स्यान्निपुणां शुद्धिमिच्छताम् ॥
जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते ।
शवस्पृशो विशुद्ध्यन्ति त्र्यहात्तूदकदायिनः ॥

इति मिताक्षरादौ वचनात्,

समानोदकानां त्र्यहो गोत्रजानामहः स्मृतम् ।

इति जाबालोक्तेश्च ।

'मूलपुरुषात्सप्तमो मूलपुरुषादष्टमादेर्जनने मरणे वा दशरात्रमाशौचं कुर्यात्, मूलपुरुषादष्टमादिस्तु मूलपुरुषात्सप्तमस्य मरणे जनने वा त्रिरात्रमेवाशौचं कुर्यात् । सप्तमस्याष्टमादौ सापिण्ड्यानिवृत्तावपि अष्टमादेः सप्तमे सापिण्ड्यनिवृत्तेः । सापिण्ड्यासापिण्ड्ययोः प्रतियोगिभेदेन भेदात् । विवाहस्तूभयत्र न भवति । "एभिरेव गुणैर्युक्तः" इत्यनेन वरेऽपि असापिण्ड्यापेक्षणात्' इति कमलाकरभट्टमतम् ।

'मूलपुरुषात्सप्तमो मूलपुरुषादष्टमादेर्मरणादावपि त्रिरात्रमेवाशौचं कुर्यात्। एकत्र सापिण्ड्यनिवृत्तावुभयत्र तन्निवृत्तेः' इति हरदत्तनागेशभट्टादीनां मतम्। अत्र द्वितीयमतमेव अस्मत्सम्मतम्। विस्तरस्तु संस्कारदीपके सापिण्ड्यविचारे द्रष्टव्यः।

"ब्राह्मणानामेकपिण्डस्वधानामादशमाद्धूर्मविच्छित्तिर्भवति" इति सुमन्तुवाक्यस्यार्थमाह (निर्णयसिन्धौ) शूलपाणिः—जीवत्पित्रादित्रिकस्य वृद्धप्रपितामहादयस्त्रयः (षट्पुरुषपर्यन्तं) श्राद्धदेवतात्वात्पिण्डभाजो भवन्ति, तदूर्ध्वं त्रयो नवपुरुषपर्यन्तं लेपभाजः, श्राद्धकर्ता च दशमः इति दशमादूर्ध्वं सापिण्ड्यनिवृत्तिः। अनेनैव न्यायेन जीवत्पित्रादिद्विकस्य नवमादूर्ध्वं सापिण्ड्यनिवृत्तिः। एवं जीवत्पितृकस्याऽष्टमादूर्ध्वं निवृत्तिः। एवञ्च सुमन्तुवाक्यात् जीवत्पितृकादीनामष्टमादेरूर्ध्वं सापिण्ड्यनिवृत्तौ सिद्धायां सप्तमादूर्ध्वं सापिण्ड्यनिवृत्तिः पित्रादीनां मरणे एव फलति। सोदकादिष्वप्ययं न्यायो योज्यः।

पूर्वाशौचमध्ये आशौचान्तरसम्पाते पूर्वशेषेण शुद्धिः।

अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति।

इति याज्ञवल्क्यवचनात्।

पूर्वाशौचरात्रिमात्रशेषे द्व्यहाच्छुद्धिः, रात्रेर्यामात्रशेषे तु त्र्यहाच्छुद्धिः।

रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात्।

इति शातातपवचनात्।

'अत्र पञ्चमदिनपर्यन्तमाशौचान्तरसंपाते पूर्वशेषेण शुद्धिः, षष्ठादिदिनेषु तु आशौचान्तरसंपाते उत्तराशौचनिवृत्त्यैव शुद्धिः।

आद्यं भागद्वयं यावत्सूतकस्य तु सूतके ।
द्वितीये पतिते स्वाद्यात्सूतकाच्छुद्धिरिष्यते ॥
अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृतः ।
एवमेव विचार्यं स्यान्मृतके मृतकान्तरे ॥

इति ब्रह्मपुराणात्'–इति केचित् ।

तन्न ! एवं सति षष्ठादिदिनेषु आशौचान्तरसम्पाते उत्तराशौचापगमेन शुद्धिः, रात्रिमात्रावशेषे च त्र्यहाच्छुद्धिरिति वैषम्यापत्तेः । "अथ यदि दशरात्राः सन्निपतेयुः आद्यं दशरात्रमाशौचमानवमात्" इतिबौधायनवचोविरोधाच्च ।

"आद्यं भागद्वयम्" इति ब्राह्मवचनस्य त्वयमर्थः ( निर्णयसिन्धौ)–"पूर्वाशौचचरमाहोरात्रस्य दिनरूपे आद्यभागद्वयेऽन्याशौचपाते पूर्वेण शुद्धिः, भागद्वयोर्ध्वं रात्रौ सूतकान्तरे द्वितीयात्पूर्वभिन्नात्सूतकान्ताद् त्र्यहादिरूपाच्छुद्धिः"इति । एतेन "रात्रिशेषे सति द्वाभ्याम्" इति वचने "रात्रिपदमहोरात्रपरम्" इति निरस्तम् । "आद्यं भागद्वयम्" इतिब्राह्मवचनैकवाक्यतया 'पूर्वाशौचान्त्यरात्रौ अन्याशौचसम्पातेऽहोरात्रद्वयमधिकं, रात्रेरन्त्ययामे तु दिनत्रयम् अधिकम्'इत्यर्थस्यैव न्याय्यत्वात् ।

"रात्रिशेषे सति द्वाभ्याम्" इति वचनं च संपूर्णाशौचे सम्पूर्णाशौचसम्पाते एव । रात्रिशेषे तदन्त्ययामशेषेवा त्रिरात्राद्याशौचसम्पाते तु पूर्वशेषेणैव शुद्धिः । द्विरात्रादिवृद्धेः पूर्ववाक्यैर्दशाहविषयत्वात् अपवादाभावे शेषशुद्धेरेव सामान्यतः प्रवृत्तेः ॥

पूर्वाशौचान्तर्वर्धितद्वित्रादिनमध्येऽधिकाशौचान्तरपाते वर्धितस्याल्पत्वादधिकेनैव शुद्धिः । नच वर्धितस्य पूर्वशेषत्वं शङ्कनीयम् । रात्रिशेषे पूर्वशेषशुद्ध्यपवादे नैमित्तिकन्यायोज्जीवनात् । अपवादाभावे उत्सर्गस्य प्राप्तेः ।

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम्॥

इति शङ्खवचने पादत्रयं स्पष्टार्थम्। चतुर्थपादस्य त्वयमर्थः—"पित्राशौचमध्ये मातृमृतौ पित्राशौचान्ते मातुः पक्षिणीमधिकां कुर्यात्" इति। इयं च पक्षिणी तृतीयादिदिनपरा, नाद्यदिनद्वये। प्रतिनिमित्तं यन्नैमित्तिकस्य आवृत्तिस्तदपवादभूता या पूर्वशेषशुद्धिस्तदपवादत्वात्पक्षिण्याशौचस्य। प्रथमदिने मातृमरणे तु न पूर्वशेषशुद्ध्या मातृमरणनिमित्तकाशौचप्रवृत्तिरपोद्यते। आशौचस्य दशाहकालसमाप्त्यैव निवर्त्यत्वात्। अतस्तदपवादभूतपक्षिण्याशौचस्य न तत्र प्रवृत्तिः। पित्राशौचद्वितीयदिने मातृमरणे च पितृदशाहसमाप्तौ एकादशदिने मातृदशाहस्यासमाप्तावपि द्वादशदिने तत्समाप्त्या आशौचस्य निवर्त्यत्वात् पूर्वशेषशुद्धेरप्रसङ्गेन न पक्षिण्याशौचं प्रवर्त्तते। एवं च द्वितीयदिने मातृमरणे एकदिनवृद्धिः फलति।

सपिण्डाद्याशौचेन मातापित्रोराशौचापगमो नास्त्येव। एवं पत्न्याः भर्त्राशौचापगमोऽपि नास्ति। तेषां तन्महागुरुत्वात् सर्वाशौचापेक्षया तदशौचस्य बलवत्त्वात्। भर्तुः पत्न्यशौचं पुत्रस्य सपत्नमात्राशौचं च पूर्वाशौचेन निवर्तते एव। महागुरुत्वाभावात्।

इयं च पक्षिणी दशमरात्रेः पूर्वं मातृमरणे ज्ञेया। दशम्यां रात्रौ तत्प्रभाते वा मातृमरणे तु गुरुणि लघोरन्तर्गतेः "गुरुणा लघु शुद्ध्येत्तु" इत्युक्तेश्च त्र्यहत्र्यहवृद्धिरेव, न तु त्र्यहत्र्यहसमुच्चिता पक्षिणी। संख्यान्तरोपजननापत्त्या त्र्यहादिश्रुतिबाधापत्तेः। अत एव "एका देया षड् देया" इत्यादौ श्रुतसङ्ख्याबाधापत्त्या समुच्चयो निरस्तो द्वादशे इति निर्णयसिन्धौ।

पूर्वाशौचेन या शुद्धिः सूतके मृतके च सा ।
सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि ॥

इति षडशीत्यां पूर्वशेषशुद्धेरपवाद उक्तः ।

अत्र—“सूतकाद् द्विगुणं शावं शावाद् द्विगुणमार्तवम् ।
आर्तवाद् द्विगुणा सूतिस्ततोऽपि शवदाहकः” ॥

इति वृद्धात्रिवचनेन सूतकादीनामुत्तरोत्तरं प्राबल्यम् । तेन न सूतकादौ शावादिसम्पाते पूर्वनिवृत्त्योत्तरनिवृत्तिः ।

समानाशौचसम्पाते प्रथमेन समापयेत् ।
असमानं द्वितीयेन धर्मराजवचो यथा ॥

इति शङ्खवचनेन त्र्यहाद्याशौचे त्र्यहाद्याशौचान्तरसंपातेऽपि पूर्वशेषेण शुद्धिः ।

त्र्यहाद्याशौचे दशाहादिगुर्वाशौचसम्पाते तु न पूर्वशेषेण शुद्धिः।

गुरुणा लघु शुद्ध्येत्तु लघुना नैव तद्गुरु ।

इति हारीतोक्तेः ।

विगतं तु विदेशस्थं शृणुयाद् यो ह्यनिर्दशम् ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥

इति मनूक्तेर्देशान्तरे दशाहमध्ये आशौचश्रवणे शेषदिनैरेव शुद्धिः, नतु श्रवणकालमारभ्य दशाहमाशौचं कार्यम् ।

“प्रोषिते कालशेषः स्यात्” इति याज्ञवल्क्योक्तेश्च ।

‘एतच्च पुत्रातिरिक्तविषयम् ।

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥

इत्यस्य सर्वापवादत्वात्’ इति केचिदाहुः ।

उत्पन्नस्य ज्ञातस्य मरणस्यैव निमित्तत्वात्, “पितरौ चे-न्मृतौ स्याताम्”इत्यस्य निर्दशाशौचप्रकरणपाठाच्च दशाहमध्ये

पुत्रस्यापि मरणदिनमारभ्यैवाशौचप्रवृत्तिः, नतु श्रवणदिन-
मारभ्य।

अनग्निमत उत्क्रान्तेराशौचादि द्विजातिषु।
दाहादग्निमतो विद्याद्विदेशस्थे मृते सति॥

इति पैठीनसिस्मृतेरुत्क्रान्तिदिनमारभ्यैवाऽऽशौचप्रवृत्तेरु-
क्तत्वात्।

दशाहाभ्यन्तरे शेषैर्दिवसैः शुद्धिरिष्यते।
पुत्राणां चैव सर्वेषां सपिण्डानां समानतः॥

इति शौनकोक्तेश्च।

दशाहादूर्ध्वं दशाहाशौचे ज्ञाते तु–
मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा।
अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुद्ध्यति॥

इति वचनाद् व्यवस्था ज्ञेया।

'देशान्तरे तु दशाहोर्ध्वं दशाहाशौचे ज्ञाते–
देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ।
मृते स्नानेन शुद्ध्यन्ति गर्भस्रावे च गोत्रिणः॥

इति पराशरोक्तेः स्नानमात्रम्' इति विज्ञानेश्वरः।

अर्वाक् त्रिपक्षात्त्रिनिशं षण्मासाच्च दिवानिशम्।
अहः संवत्सरादर्वाग्देशान्तरमृतेष्वपि॥

इति विष्णूक्तेः "देशान्तरमृतम्" इति वचनं वर्षान्ते एव
स्नानविधायकम्' इति माधवः।

वस्तुतस्तु "देशान्तरमृतं श्रुत्वा" इति पराशरवचनं सोद-
कानां त्रिरात्रमध्येऽपि देशान्तरस्थसोदकमरणश्रवणे स्नान-
मात्रविधायकम्। "गर्भस्रावे च गोत्रिणः" इति सामान्यश्रवणात्।
अतः सपिण्डमरणे देशान्तरे आशौचं भवत्येवेति युक्तम्।

देशान्तरलक्षणं तु—

महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः ।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥
देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैवच ॥ इति ।
एतत्सर्वं मातापित्रादिभिन्नपरम् ।

मातापितृमरणे तु दूरदेशेऽपि संवत्सरोर्ध्वमपि मरणश्रवणे पूर्णमाशौचं कुर्यात् । स्त्रीपुंसयोः परस्परं सपत्नीषु चैवम् । "पितरौ चेन्मृतौ स्याताम्" इति पूर्वोक्तपैठीनसिवचनात् ।

देशान्तरमृतौ भर्तुर्दशाहाच्च बहिः श्रुतम् ।
संपूर्णं सूतकं भार्या कुर्यादपि पतिस्तथा ॥

इति धर्मार्णवे पैठीनसिवचनात् ।

मातापित्रोर्यथाऽऽशौचं दशाहं क्रियते सुतैः ।
अनेकेऽब्देऽपि दम्पत्योस्तथैव स्यात् परस्परम् ॥
सपत्न्योरपि आशौचं भवेदेवं विनिश्चितम् ।

इति संस्कारप्रकाशादौ वचनाच्च ।

सपत्नमातुर्मरणेतु—

पितृपत्न्यामपेतायां मातृवर्जं द्विजोत्तमः ।
संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत् ॥

इति दक्षोक्तेर्व्यवस्था ।

पितुः पत्न्यामपेतायामौरसे तनये तथा ।

इति ब्राह्मवचनादुपनीतौरसपुत्रमरणेऽपि संवत्सरोर्ध्वमपि त्रिरात्रम् ।

इदमतिक्रान्ताशौचं दशाहादिपूर्णाशौचविषयं, नत्वनुपनीतादिनिमित्तत्रिरात्रादौ ।

उपनीते तु विषमं तस्मिन्नेवातिकालजम् ।

इति व्याघ्रोक्तेः ।

अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद् गृही ।

त्रिरात्रं सूतकं तत्र न तद्द्रव्यस्य कर्हिचित् ॥

इति मनुनाऽतिक्रान्ताशौचविधेर्दशाहादिपूर्णाशौचविषयत्वोक्तेश्च ।

एतेनाचार्यादेस्त्रिरात्राद्याशौचातिक्रमे दशाहमध्ये श्रवणे त्रिरात्राद्याशौचं वदन्तः परास्ताः ।

सर्वत्र क्रियाकर्तुर्दशाहः ।

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ।

प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥

इति मनूक्तेः ।

सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे नरः ।

सोऽपि कुर्यान्नवश्राद्धं शुध्येच्च दशमेऽहनि ॥

इति दिवोदसीये स्मृतेश्च ।

जनने त्वतिक्रान्ताशौचं नास्त्येव ।

नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि ।

इति देवलोक्तेः ।

पितुः स्नानं तत्रापि भवत्येव ।

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।

सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥

इति मनूक्तेः । पुत्रजन्मश्रवणे स्नानोक्तेरन्येषां स्नानमपि नास्ति ।

रात्रौ जनने मरणे वा रात्रिं त्रिभागां कृत्वा ऽऽद्यभागद्वये चेत् जननादिकं, पूर्वं दिनं ग्राह्यम्, अन्त्येतूत्तरम् ।

रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्व एवतु ।
उत्तरांशः प्रभातेन युज्यते ऋतुसूतके ॥ (ऋतौ रजसि)

इति कश्यपस्मरणात् । अथ वा प्रागर्धरात्रात्पूर्वदिनम्, अर्धरात्रोत्तरं परं दिनम् ।

अर्धरात्रावधिः कालः सूतकादौ विधीयते ।

इति तेनैवोक्तेः ।

अथ वा सूर्योदयात्पूर्वं सम्पूर्णरात्रौ पूर्वदिनम् ।
रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥

इति च तेनोक्तेः । अत्र सर्वत्र देशाचारतो व्यवस्था ।

तत्र मैथिलानां सारस्वतानां कौर्माचलादीनां च तृतीयः पक्षः । दाक्षिणात्यादीनां प्रथमः । पराशरोऽप्यमुमेव पक्षमङ्गीकरोति । द्वितीयस्तु मध्यदेशीयानां केषाञ्चित् ।

"अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयम् ।
तदलाभे पलाशानां वृन्तैः कार्यः पुमानपि ॥
वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्मणा ।
ऊर्णासूत्रेण बध्वा तु प्रलेप्तव्यो यवैस्तथा ॥
सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाऽग्निना ।
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबान्धवैः ।
एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥"

इति ब्राह्मोक्तेः पर्णशरदाहे त्रिरात्रम् ।

दशाहमध्ये पर्णशरदाहे तु न त्रिरात्रम् । तत्र "प्रोषिते कालशेषः स्यात्" इति याज्ञवल्क्योक्तेः । किन्तु तदूर्ध्वम् । तत्र पत्नीपुत्रयोः पूर्वमगृहीताशौचयोर्दशाहमेव । गृहीताशौचयोस्तु त्रिरात्रम् । पत्नीमृतौ भर्तुः, सपत्न्योश्च परस्परमगृहीताशौचानां दशाहमेव ।

अतिक्रान्तेऽपि तेषां दशाहाशौचस्य पूर्वमुक्तत्वात्। गृहीताशौचानां तु त्रिरात्रम्। अन्यसपिण्डानां गृहीताशौचानामगृहीताशौचानां च त्रिरात्रमेव। गृहीताशौचानां सपिण्डानां स्नानमात्रमिति स्मृत्यर्थसारे।

बह्वृचपरिशिष्टे—"अथातीतसंस्कारः स चेदन्तर्दशाहं स्यात्तत्रैव सर्वं समापयेत्। ऊर्ध्वमाहिताग्नेर्दाहात्सर्वमाशौचं कुर्यात्। अन्येषु (अनग्निषु) पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचं गृहीताशौचयोः कर्माङ्गं त्रिरात्रम्" इति। द्वादशवर्षादिप्रतीक्षोत्तरं दाहे तु पुत्रादीनां सर्वेषां त्रिरात्रमिति कल्पतरुदिवोदासादयः। अतिक्रान्तेऽपि पुत्रादीनां पूर्णाशौचस्यैवोक्तत्वात्प्रतिकृतिदाहेऽपि दशाहमेव युक्तम्।

चतुर्थमासे गर्भस्रावे मातुः चतुरहमाशौचम्। सपिण्डानां पितुश्च स्नानमात्रम्। "गर्भस्रावे स्नानमात्रं पुरुषस्य" इति वृद्धवसिष्ठोक्तेः। पञ्चमषष्ठयोर्मातुः पञ्चाहषडहम्। सपिण्डानां पितुश्च कर्मानधिकाररूपं दिनत्रयम्। यद्वा 'पित्रादिसपिण्डानामेकाहमाशौचम्।

अजातदन्ते तनये शिशौ गर्भच्युते तथा।
सपिण्डानां तु सर्वेषामेकरात्रमशौचकम्॥

इति यमोक्तेः' इति मदनपारिजातः।

सप्तममासादौ प्रसवे सूतिकायाः सर्वेषां सपिण्डानां च दशाहम्। तत्र सूतिकाया अस्पृश्यत्वं, पितुः स्नानेनाऽस्पृश्यत्वनिवृत्तिः, अन्येषां सपिण्डानां कर्मानधिकारमात्रं नत्वस्पृश्यत्वम्।

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः॥

इति संवर्तवचनात् ।

पुत्रपदात्कन्योत्पत्तौ न पितुः स्नानमिति हारलतायाम् ।

पुत्रपदस्य "पौत्री मातामहस्तेन" इत्यत्र कन्यायामपि प्रयोगात्तदुत्पत्तावपि स्नानं कर्तव्यमिति कमलाकरः ।

सूतिकायाः कर्मानधिकारस्तु "सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेत्, मासेन स्त्रीजननीम्" इति पैठीनसिवचनात् पुत्रजनने विंशतिरात्रं, कन्याजनने तु मासम् ।

'विंशतिरात्रगणना चाशौचोत्तरदिनमारभ्य कार्या । अन्यथा शूद्राः सपिण्डानामाशौचे विद्यमानेऽपि विंशतिरात्रोत्तरं कर्माधिकारप्रसङ्गः स्यात् । विध्यनुवादविरोधश्च । जननप्रभृतिदशाहमाशौचस्य प्राप्तत्वादनुवादत्वं, तदुत्तरं चाप्राप्तत्वाद्विधित्वमिति । तस्मात्पुत्रोत्पत्तौ जननमारभ्य मासं यावत्कर्मानधिकारः, कन्योत्पत्तौ तु चत्वारिंशद्दिनानि' इति कमलाकरभट्टाः ।

वस्तुतस्तु यत्रैकेनैव पदेन स्वार्थ एकं प्रत्युद्दिश्यते अन्यं प्रतिचोपादीयते तत्र वैरूप्यम् । यथा "वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र स्वाराज्यार्थं यागमनूद्य वाजपेयरूपगुणविधिपक्षे । नचेह तथा । दशाहोत्तरदिनेष्वनधिकारमात्रबोधनात् । "द्वादशाहीनस्य" इत्यादौ प्रकृतितः प्राप्तानां तिसृणामुपसदाम् अतिदेशतोऽधिकोपसद्विधिवत् ।

किञ्च अस्पृश्यत्वकर्मानाधिकाराभ्यामाशौचं द्वेधा । तत्राद्ये ( अस्पृश्यत्वे ) यथा जननदिनं पूर्वावधिरुत्तरावधिर्दशमदिनं, तथैव द्वितीये ( कर्मानधिकारे ) जननदिनदशमदिनयोः पूर्वोत्तरावधित्वप्राप्तौ पैठीनसिवाक्येन पुत्रजननादौ उत्तरावधिदशमदिनबाधेन विंशतितमदिनं विधीयते । अन्यथा पूर्वोत्तरावधित्रिशिष्टापूर्वकर्मानधिकारविधाने महागौरवापत्तेः । यथाऽवभृथस्य

दीक्षोन्मोचनार्थत्वाद् "दीक्षितो न जुहोति" इत्यग्निहोत्रानधिकारेऽवभृथावधिके प्राप्ते "एतया पुनराधेयसंमितयेष्ट्वाऽग्निहोत्रं जुहोति" इत्यनेनाग्निहोत्रानधिकारे प्राप्तपूर्वावधिबाधेनोदवसानीयारूपावध्यन्तरं विधीयते, एवमिहापि।

उक्तं च रघुनाथभट्टैरपि "दशरात्रादिना मृत्याशौचस्य स्पर्शप्रतिबन्धकत्वशक्तिनाशेऽपि कर्माधिकारप्रतिबन्धशक्तिर्विंशतिरात्रादौ विद्यते" इति। तस्माद् जननप्रभृत्येवायं कर्मानाधिकारः।

इदं च वाक्यं त्रिवर्णे एव प्रवर्तते, न शूद्रे। तत्र मासं कर्मानधिकारसिद्धेरिति। एतेन यदुक्तं "शूद्राः सपिण्डानामाशौचं विद्यमानेऽपि" इति, तत्प्रत्युक्तम्। स्पष्टं चेदं शुद्धिमयूखे कृष्णभट्टीयायां सिन्धुव्याख्यायां चेत्यलम्।

अयं च विंशतिरात्रपर्यन्तं मासपर्यन्तं वा कर्मानधिकारः श्रौतदर्शादिकर्मभिन्नपरः। "प्रजातायाश्च दशरात्रादूर्ध्वं स्नानात्" इति कात्यायनोक्तेः।

"अत्रेदं बोध्यम्। सम्पातो नामाशौचिनामेकाशौचित्वज्ञाने पराशौचित्वज्ञानम्। तेन पूर्वाशौचमध्ये उत्पन्नमपि पराशौचं पूर्वाशौचान्ते ज्ञातं चेत्पूर्वेण न निवर्तते। सम्पाताभावात्।

पूर्वत्वपरत्वे तूत्पत्तिकृते, न ज्ञानकृते। तेन पूर्वोत्पन्नाशौचस्य परोत्पन्नाशौचज्ञानोत्तरं ज्ञानेऽपि पूर्वोत्पन्नाशौचेन परोत्पन्नाशौचं पूर्वोत्पन्नाशौचमध्ये ज्ञातं निवर्तते एव। सम्पात एव तु ज्ञानकृतो न तु पूर्वत्वादिकमिति सिद्धान्तात्" इति धर्मसिन्धौ स्पष्टम्।

"अन्तर्दशाह इति कालोपादानं तु तत्कालाभ्यन्तर एवाशौचसाङ्कर्यं, न तु तदनन्तरं स्नानादेः प्रागपि आशौचसाङ्क-

र्यमिति प्रतिपादनार्थम्, यत्र तु पूर्वजातं निमित्तं पश्चाज्ज्ञातं पश्चाज्जातं च पूर्वं ज्ञातं तत्र निमित्तज्ञानजन्याशौचपौर्वापर्यमगणयित्वैवाशौचस्वरूपयोग्यनिमित्तकालपौर्वापर्यादेवाशौचव्यवहारार्थं च" इति ग्रन्थेन रघुनन्दनोऽप्येतमर्थं स्फुटीचकार ।

नालच्छेदोर्ध्वं जातमृते मृतजाते वा सपिण्डानां दशाहम् ।

यावन्न च्छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥

इति जैमिन्युक्तेः । 'नालच्छेदात्पूर्वं शिशूपरमे परिपूर्णं सूतकं न भवति किन्तु छिन्ने नाले सति पश्चान्मृतौ सूतकं पूर्णं विधीयते' इति तदर्थः ।

"जीवन् जात" इति बृहन्मन्वेकवाक्यत्वात् । किन्तु तत्र पित्रादीनां त्रिरात्रमेव ।

जीवन् जातो यदि ततो मृतः सूतकएवतु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥

इति बृहन्मनुवचनात् ।

इदञ्च प्रसवाशौचमेव । शावनिमित्तं तु नालच्छेदात्पूर्वं परत्र वा मृते स्नानमात्रम् । "प्राङ्नामकरणात्सद्यःशौचम्" इति शङ्खोक्तेः । सद्यः शौचं स्नानमात्रेणाशौचनिवृत्तिः ।

अत्र "नामकरणं नाशौचान्तकालोपलक्षणम्" इति निर्णयसिन्धौ प्रपाञ्चितम् । तेन नामकरणात्पूर्वं दशाहानन्तरमपि नामकरणाभावे दाहोदकदानयोर्निषेधात्स्नानमात्राच्छुद्धिः । नामोत्तरं दन्तोत्पत्तेः प्राग्दाहे सति अहः ।

अदन्तजाते तनये शिशौ गर्भच्युते तथा ।
सापिण्डानां तु सर्वेषामहोरात्रमशौचकम् ॥

इति यमोक्तेः ।

दाहाभावे तु स्नानमात्रम् ।

"अदन्तजाते प्रेते सद्य एव नास्याग्निसंस्कारः" इति विष्णुना दाहाभावे तदुक्तेः ।

गङ्गातीरे मृतं बालं गङ्गायामेव पातयेत् । (अ०१०।९२)
अन्यदेशे क्षिपेद् भूमौ सप्तविंशतिमासजम् ॥
अतः परं दहेत्तस्य गङ्गायामस्थि निक्षिपेत् ।

इति गारुडवचनानुसारेण दाहाभावपक्षे व्यवस्था कर्तव्या ।

अत्र गङ्गापदं महानद्युपलक्षणम् ।
यत्र सन्ति महानद्यस्तत्र तास्वेव निक्षिपेत् ॥

इति तत्रैव (अ०१०।१०७) उत्तरत्र संन्यासिविषये कथनात् ।

दाहविकल्पं चाह लौगाक्षिः—

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेवच ।
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ॥

संस्कारं दाहम् । अन्यत्र अकृतचूडे ।

'चूडाकरणं तृतीयवर्षकालोपलक्षणार्थम्' इति मेधातिथिहरदत्तौ । चूडाकरणस्यापि कालोपलक्षणत्वं नेति निर्णयसिन्धौ प्रपञ्चितम् ।

त्रिवर्षोर्ध्वं तु दाहोदकदानं नियतम् ।

नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्युर्नाम्नि वाऽपि कृते सति ॥

इति मनूक्तेः । उदकं दाहोपलक्षणम् ।

दन्तोत्पत्त्यनन्तरं प्राक् त्रिवर्षान्तान्मृतेऽह्नः । "दन्तजातेऽप्यकृतचूडे त्वहोरात्रेण शुद्धिः" इति विष्णूक्तेः ।

दन्तोत्पत्त्यनन्तरं त्रिवर्षान्तात्प्राक् चूडाऽभावेऽप्यग्निदाने त्र्यहः ।

यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः ।

तदापि दाहयित्वैनमाशौचं त्र्यहमाचरेत् ॥ इत्याङ्गिरसोक्तेः ।

अत्र दाहयित्वेत्यनुवादः । दाहाशौचोभयविधाने वाक्य-भेदात् । एवं च नास्य त्रिवर्षमात्रपरत्वम् । किन्तु अकृतचूडस्य जातदन्तस्य, अकृतचूडस्य पूर्णत्रिवर्षस्य च मरणे दाहे सति त्र्यहः इति आङ्गिरसवचनार्थः ।

तदभावे "दन्तजातेऽप्यकृतचूडे" इतिपूर्वोक्तविष्णूक्तेरेकाहः ।

कृतचूडस्य सदा त्र्यहः, दाहश्च नियतः ।

निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ।

इति मनूक्तेः ।

त्रिवर्षोर्ध्वं कृतचूडेऽकृतचूडे वा प्रागुपनयनात् त्र्यहः । "यद्यप्यकृतचूड" इति पूर्वोक्ताङ्गिरसवचनात् ।

"अविशेषेण" इति वक्ष्यमाणवचनाच्च ।

एतत्सर्वं प्रागुक्तं सापिण्डानाम् । मातापित्रोस्तु दशाहोर्ध्वं पुत्रस्य कन्यायाश्च दशाहोत्तरं मरणे सर्वत्र त्रिरात्रम् । 'बालानामजातदन्तानां त्रिरात्रेण शुद्धिः" इति कश्यपोक्तेः ।

बैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम् ।

इति मनूक्तेश्च ।

अन्यसपिण्डानां कन्यासु चौलात्प्राङ्मृतौ स्नानम् ।

अचूडायां तु कन्यायां सद्यः शौचं विधीयते ।

इत्यापस्तम्बोक्तेः ।

चौलोत्तरं त्रिवर्षोर्ध्वं वा वाग्दानात्पूर्वं तास्वेकाहः ।

अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः ।

त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते ॥

इत्याङ्गिरसा कन्यासु त्रिरात्रविषयेऽहोरात्रविधानात् ।

अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।

इति याज्ञवल्कीयाच्च।

द्विजानामित्युपेक्ष्य वर्णानामित्युक्तेः शूद्रस्योपनयनस्थानीयविवाहात्पूर्वं त्रिरात्रम्।

'विवाहसंस्कारस्य षोडशाब्दकालोपलक्षणत्वात् षोडशाब्दात्पूर्वं विवाहेऽपि षोडशाब्दमध्ये त्रिरात्रम्' इत्यपरार्कादयः।

'कालोपलक्षणत्वाभावात् षोडशाब्दात्प्राक् विवाहे तन्मध्येऽपि दशाहमेव' इति कमलाकरादयः। इदमेव युक्तम्।

षोडशाब्दोत्तरं तु विवाहाभावेऽपि सम्पूर्णमेव।

अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात् परम्।
मृत्युं समधिगच्छेच्चेन्मासात्तस्यापि बान्धवाः॥
शुद्धिं समधिगच्छन्ति नात्र कार्या विचारणा।

इत्यपरार्के शङ्खोक्तेः।

वाग्दानोत्तरं प्राग्विवाहाद् भर्तृकुले पितृकुले च सप्तमपुरुषावधि कन्यासु त्रिरात्रम्।

अवारिपूर्वं दत्ता तु या नैव प्रतिपादिता।
असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम्॥

इति मरीच्युक्तेः।

एतद्वयोनिमित्तमाशौचं सर्ववर्णसाधारणम्।
तुल्यं वयसि सर्वेषामतिक्रान्ते तथैवच।

इति व्याघ्रपादोक्तेः। वयोनिमित्तकम् "आदन्तजन्मनः सद्यः" इत्यादिविहितं, दशाहेऽतिक्रान्ते विहितं त्र्यहादि च आशौचं सर्वेषां वर्णानां तुल्यम् अविशिष्टमिति तदर्थः।

द्विजानां दशाहाद्याशौचं चोपनयनोत्तरं प्रवर्तते।
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम्॥
क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु।

त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ॥

इति याज्ञवल्क्योक्तेः ।

इदानीं प्रायो दशाहाशौचपक्ष एव प्रचलितः ।
सर्वेषामेव वर्णानां सूतके मृतके तथा ।
दशाहाच्छुद्धिरेकेषामिति शातातपोऽब्रवीत् ॥

इत्याङ्गिरसोक्तेः ।

'ऊढकन्यानां तु "संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं च" इति विष्णूक्तेः प्रसवे एकरात्रं मरणे त्रिरात्रम्' इति विज्ञानेश्वरापरार्कौ । माधवस्तु 'प्रसवेऽपि पित्रोस्त्रिरात्रं, भ्रात्रादिबन्धुवर्गस्यैकरात्रम् ।

दत्ता नारी पितुर्गेहे सूयेताऽथ म्रियेत वा ।
तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिः ॥

इति ब्राह्मोक्तेः' इत्याह ।

वस्तुतस्तु विज्ञानेश्वरोक्तमेव युक्तम् । पूर्वोक्तविष्णुवचनैकवाक्यतया, दत्तेत्यादिब्राह्मवचनस्थतुशब्दस्य चार्थकतया च तस्य वचनस्य 'तद्बन्धुवर्गस्तज्जनकश्च प्रसवे एकेन, मरणे त्रिभिः शुचिः' इत्यर्थकतया विरोधाभावेन प्रसवे जनकस्याप्येकरात्रं, मरणे भ्रातॄणामपि त्रिरात्रमिति व्यवस्थायाः सूपपादत्वात् । शिष्टानां सम्प्रदायोऽपि तथैव । अत एव च भगिन्याः स्वगृहमरणे समानग्राममरणे वा त्रिरात्राशौचप्रचारः सङ्गच्छते इति ।

अन्यत्र भ्रातृभगिन्योस्तु परस्परमृतौ पक्षिणी ।
परस्परमृतौ भ्रातृभगिन्योः पक्षिणी भवेत् ।

इति ब्राह्मात् ।

पतिगृहे प्रसवे तु पित्रादीनामाशौचं नास्ति ।

मृतौ पित्रोस्त्रिरात्रमस्त्येव ।
प्रत्ताऽप्रत्तासु योषित्सु संस्कृताऽसंस्कृतासु च ।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ॥
इति शङ्खस्मृतेः ।
"बैजिकादभिसम्बन्धाद्" इत्युक्तेश्च ।
'दन्तोत्पत्तेः प्राक् पित्रोरेकरात्रम् "अजातदन्तासु पित्रोरेकरात्रम्" इति मयूखे शङ्खस्मरणात्' इति मदनरत्नादौ ।
शिष्टास्तु पूर्वोक्तवचनविरोधात् इदं नाद्रियन्ते ।
'पितृगेहादन्यत्र कन्यामृतौ पित्रोः पक्षिणी । "दत्तायां पक्षिणीभवेत्" इति पुलस्त्योक्तेः ।
पितृगेहादितोऽन्यत्र यदि पुत्री प्रमीयते ।
पक्षिणी तत्र पित्रोः स्यान्नान्येषामिति निश्चयः ॥
इति षडशीत्युक्तेश्च, इति माधवः ।
'अन्यत्रेत्यस्य 'ग्रामान्तरे' इत्यर्थ' इति स्मृत्यर्थसारे । तेनैकग्रामे त्र्यहलाभः । इदमेव शिष्टसंमतम् ।
भ्रात्रादेस्तु स्वगृहादन्यत्र भगिनीमृतौ, श्वशुरादिमृतौ च पक्षिणी ।
श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले ।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥
इति वृद्धबृहस्पतिस्मृतेः ।
आदन्तात्सोदरे सद्य आचूडादेकरात्रकम् ।
आप्रदानात्त्रिरात्रं स्याद्दशरात्रमतः परम् ॥
इति कौर्मवचने सोदरपदं सपिण्डोपलक्षणम् । तेन सोदरादीनां सर्वेषां सपिण्डानां दन्तजननात्पूर्वं कन्यामृतौ स्नानमात्रम् । तच्च "आदन्तजन्मनः सद्य" इत्यस्माद्वचनादेव सिद्धम् । अत 'आ-

दन्तात्' इति दृष्टान्तार्थम्। 'यथा आदन्तात्सद्यस्तथा आचूडादपि। आप्रदानात् प्रदानात्पूर्वं चौलोत्तरं त्रिवर्षोत्तरं वैकरात्रम्। तत ऊर्ध्वं विवाहात्प्राक् पितृभर्तृकुलयोस्त्रिरात्रम्। विवाहानन्तरं भर्तृकुले दशरात्रम्' इति तदर्थः।

पित्रोर्मृतावूढानां पुत्रीणां त्रिरात्रम्।

पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत्।

त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् यमः॥

इति माधवीये वृद्धमनूक्तेः।

दशाहोर्ध्वमपि पित्रोर्मृतावूढानां पुत्रीणां वत्सरान्ते देशान्तरेऽपि श्रवणे त्रिरात्रमेवेति शिष्टाचारः। 'भ्रातुर्भगिनीगृहे तस्या वा तद्गृहे मृतौ त्रिरात्रम्, अन्यत्र तु पक्षिणी' इति षडशीतावुक्तम्।

विदेशस्थभगिन्यादिमृतौ तदीयाशौचमध्ये तन्मरणश्रवणेऽपि स्नानमात्रम्।

भगिन्यां संस्कृतायां च भ्रातर्यपि च संस्कृते।

मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते॥

शालके तत्सुते चैव सद्यः स्नानेन शुद्ध्यति।

इति मयूखे वृद्धवसिष्ठोक्तेः। समानदेशे तत्तद्वचनैरशौचस्य प्रतिपादितत्वात् अस्य वचनस्य विदेशपरताया एव युक्तत्वात्। अपूर्णाशौचानां सोदकमातुलश्वशुरादीनां सर्वेषां देशान्तरमरणे स्नानमेवेति निष्कर्षः। देशान्तरलक्षणं तूक्तम्।

उपनीतमातुलबन्धुत्रयादीनामेव त्रिरात्रपक्षिण्याद्याशौचम्। अन्यथा दन्तजननादेः पूर्वं मातुलादेर्मृतौ त्रिरात्रपक्षिण्यादि, तादृशस्य भ्रात्रादेः सद्य इत्यनौचित्यं स्यात् इति टिप्पण्याम्।

"यादृग्वयसि यादृङ्मरणे सपिण्डानां दशाहं तादृग्वयसि

तादृङ्मरणे आचार्यादीनां त्रिरात्रादि। अन्यथा "मातुले पक्षिणीं रात्रिम्" इति मनुवचनेन अजातदन्तमातुलमरणेऽपि भागिनेयस्य पक्षिणी, तत्सपिण्डानाम् "आदन्तजननात्सद्य" इत्यादिना सद्यः शौचमिति महद्वैषम्यं स्यात्" इति शुद्धितत्त्वे रघुनन्दनश्च ( २८३ पृ० )। युक्तं चैतत्।

अनुपनीतपुत्रस्य अनूढकन्यायाश्च मातापितृमरणे संपूर्णं दशाहमाशौचम्। अन्यमरणे न किञ्चित् इति धर्मसिन्धौ।

दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रम्, अनुपनीतयोः पक्षिणी।

संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते।
संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः॥

इति वृद्धमनूक्तेः। संस्कृते उपनीते।

"दौहित्रे भगिनीसुते" इत्यत्र पुंस्त्वविवक्षया दौहित्र्यां भागिनेय्यां च स्नानमेव, एवं बन्धुत्रयेऽपीति न वाच्यम्। अनुवाद्यविशेषणस्य विवक्षितुमशक्यत्वात्" इति कृष्णभट्टीये।

"यस्योभयं हविः" इत्यादौ अनुवाद्यविशेषणद्वित्वादिविवक्षाया दृष्टत्वात् सर्वत्र पुंस्त्वं विवक्षितमेवेति भागिनेयीमरणे दौहित्रीमरणे पितृष्वस्रादिकन्यामरणे च नाशौचम्।

तुल्यन्यायात् पितृष्वस्रादिकन्यानां तदीयमातुलादिमरणे, दौहित्र्या भागिनेय्याश्च मातामहमातुलमरणे च नाशौचम्" इति धर्मसिन्धुकारः। अनयोः पक्षयोः समाचाराद्व्यवस्था। महाराष्ट्रादिषु प्रायः आद्यपक्षो दृश्यते। विन्ध्योत्तरवासिषु तु उत्तरपक्षो बाहुल्येनेति शिष्टवचनमनुसृत्याचरणीयमित्यलम्।

दौहित्रभागिनेययोः कृतचौलयोः त्रिवर्षयोर्वा मरणे एव पक्षिणी। अन्यथा दन्तजननादेः पूर्वं भ्रात्रादेः सद्यः, ताद-

शस्य दौहित्रादेः पक्षिणीत्यनौचित्यं स्यात् इति बोध्यम् ।

'मातुलादिषु मृतेषु त्रिरात्रम् ।

मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरोः ।
मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुद्ध्यति ॥

इति प्रचेतसोक्तेः, इति माधवः । एतत्स्वगृहमृतौ ज्ञेयमिति कमलाकरः ।

सन्निधिविदेशाद्यपेक्षया व्यवस्था कार्येति शिष्टाः ।

पितृष्वसुस्तु पक्षिणी ।

पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ।

इति वृद्धमनूक्तेः ।

पितृष्वसुर्भ्रातुष्पुत्रमरणे तु स्नानमात्रम् । विशेषाशौचापादकवचनाभावात् ।

बन्धुत्रयमरणे पक्षिणी ।

मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च ।

इति मनुस्मरणात् ।

बान्धवास्त्रिविधाः—आत्मबान्धवाः, पितृबान्धवाः, मातृबान्धवाश्च । आत्मनः पितृष्वसृमातृष्वसृमातुलपुत्रा आत्मबान्धवाः । पितुः पितृष्वसृमातृष्वसृमातुलपुत्राः पितृबान्धवाः । मातुः पितृष्वसृमातृष्वसृमातुलपुत्रा मातृबान्धवाः ।

'जामातृमरणे त्रिरात्रं, शालकमरणे पक्षिणी । "जामातरि मृते शुद्धिः" इत्यादिवचनात्' इति निर्मूलत्वादुपेक्ष्यम् । एवं पितृव्याशौचमपि भ्रातृकन्याया निर्मूलत्वादुपेक्ष्यमेव ।

गृहे जामातृमरणे त्रिरात्रम् अन्यत्र न किंचित् ।

गृहे यस्य मृतः कश्चिदसपिण्डः कथञ्चन ।
तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः ॥

इत्यङ्गिरसोक्तेः। असपिण्डः सपिण्डसदृशो जामात्रादिः।

मातामहस्य मातामह्याश्च मरणे त्रिरात्रम्।

त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत्।

इति बृहस्पत्युक्तेः।

श्वशूद्रपतिताश्चान्त्या मृताश्चेद् द्विजमन्दिरे।
शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा॥
दशरात्राच्छुनि मृते मासाच्छूद्रे भवेच्छुचि।
द्वाभ्यां तु पतिते गेहमन्त्ये मासचतुष्टयात्॥
अत्यन्त्ये वर्जयेद्गेहमित्येवं मनुरब्रवीत्।

इति बृहन्मनूक्तेः गृहे श्वशूद्रादिमरणे गृहस्य दशरात्राद्याशौचम्। अन्त्यो म्लेच्छः। 'अत्यन्त्यः श्वपाक' इति वाचस्पतिः।

द्विजमरणे तु त्रिदिनम्।

द्विजस्य मरणे वेश्म विशुद्ध्यति दिनत्रयात्।

इति यमवचनात्।

गृहे पश्वादिमरणे तु—

ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित्।
ग्रामस्य तावदाशौचं निर्गते शुचितामियात्॥

इति बृहद्विष्णूक्तं यावत्पशुशवस्तिष्ठति तावदाशौचम्।

"द्विजस्य मरणे वेश्म" "दशरात्राच्छुनि मृते" इत्यादिप्रतिपादितमाशौचमेकभूमिकगृहे एव। द्वित्रादिभूमिकगृहे तु ग्रामवद् यावच्छवस्तिष्ठति तावदाशौचं शिष्टाचारात्।

शवस्पर्शे तु "शवस्पृशो ग्रामं न प्रविशेयुरानक्षत्रदर्शनाद्रात्रौ चेदाऽऽदित्यस्य" इति हारीतोक्तेः सज्योतिराशौचम्। अत्र शवस्पृशः शववाहका ग्राह्याः।

स्पर्शमात्रे तु--

शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति ।

इति देवलेन स्नानमात्रोक्तेः ।

'दत्तकस्य जनकमरणे, जनकस्य वा दत्तकमरणे नाशौचम् ।

गोत्ररिक्थे जनयितुर्न भजेद्दात्रिमः सुतः ।

गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

इति मानववचने गोत्ररिक्थस्वधापदैर्जनकदत्तकयोः परस्परसम्बन्धप्रयुक्तकार्यमात्रस्य "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यत्रावस्थाविशेषस्येव लक्षणाल्लक्षितकार्यमात्रनिवृत्त्या आशौचस्यापि निवृत्तिसिद्धेः' इति मयूखे नीलकण्ठभट्टाः ।

तन्नेति कमलाकरभट्टाः । जनकेऽपि--

बैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम् ।

इति वाचनिकाशौचस्यानिवार्यत्वात् ।

दत्तकश्च स्वयंदत्तः कृत्रिमः क्रीत एव च ।

इत्युपक्रम्य--

सूतके मृतकेचैव त्र्यहाशौचस्य भागिनः ।

इति शुद्धितत्त्वे ब्राह्मोक्तेश्च । स्मृतिकौमुद्यां हारलतायामप्येवम् ।

दत्तकस्य पुत्रपौत्राणां जनने मरणे वा सपिण्डानामेकाहः ।

सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।

एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ॥

इति मरीच्युक्तेः । परपूर्वयोः बीजिपालकयोः ।

इयं च व्यवस्था प्रागुपनयनाद् बैजिकसम्बन्धाद् यत्र त्रिरात्रमुक्तं तत्रैव । उपनीतदत्तकमरणे तु पालकपितुः तत्सपिण्डानां च त्रिरात्रैकरात्रयोरप्राप्तेर्दशाहाशौचमेवेति मयूखे नीलकण्ठभट्टाः ।

अस्य मतस्य प्रचारः भट्टभट्टोपाद्धेषु काश्यां दृश्यते ।

"अथ तु कथमपि स्वल्पसम्बन्धयुक्ते स्नानं वासोयुतं स्यात्" इति त्रिंशच्छलोक्याम् ।

अस्यार्थः—स्वल्पेनापि एकाहाद्याशौचप्रयोजकेन सम्बन्धेन युक्ते मातुलादौ मृते सति सचैलं स्नानं कार्यम् । सर्वत्र गुरुणो लघुनो वाऽऽशौचस्य प्राप्तिकाले समाप्तिकाले च स्नातव्यमिति यावत् ।

अथवा स्वल्पैर्दशाहभिन्नपक्षिणीत्रिरात्राद्याशौचप्रयोजकैः सम्बन्धैर्युक्ते बन्धुत्रयमातुलानुपनीतसपिण्डादौ मृते देशान्तरे कालान्तरेऽपि स्नानं भवत्येव । तथा च यस्य सन्निहितकालेऽपि स्नानमात्रं तस्य कालान्तरे स्नानमपि नेत्यर्थः ।

यद्वा, स्वल्पः आशौचप्रयोजकसम्बन्धभिन्नः सम्बन्धः शालकसुतत्वादिः, ऊढकन्यायाः पितृव्यत्वादिः, पितृभगिन्या भ्रातृपुत्रत्वादिश्च तद्युक्ते आशौचाभावेऽपि स्नानमात्रं भवत्येव । यत्किञ्चित्सम्बन्धे आशौचाभावेऽपि स्नानमात्रं सन्निधौ सर्वत्र कार्यमित्यर्थः ।

पक्षत्रयमपि शिष्टाचारे सर्वत्र दृश्यत इति धर्मसिन्धौ ।

यत्यादीनां तु नाशौचम् ।

नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाशौचं कीर्तितं सद्भिः पतिते च तथा मृते ॥

इति कौर्मोक्तेः ।

मातापितृमरणे यतेः स्नानं भवति, तदन्येषां पुत्रादीनां मरणे तु स्नानमपि न ।

न स्नानमाचरेद्भिक्षुः पुत्रादिनिधने श्रुते ।
मातापितृक्षयं श्रुत्वा स्नात्वा शुध्यति साम्बरः ॥

इति संस्कारप्रकाशे वचनात् ।

एवं गुरौ कैवल्यं प्राप्तेऽपि ।

दिवं गतौ गुरौ शिष्यैस्तदा कार्यमुपोषणम् ।
स्नात्वा सचैलं यतिभिरेष धर्मः सनातनः ॥

इति तत्रैवोक्तेः ।

ब्रह्मचारिणः पित्रादिमरणेऽपि अन्त्यकर्माकरणे आशौचाभाव एव । सोऽपि ब्रह्मचर्यकाले एव । समावर्तनोत्तरं तु त्र्यहाशौचं भवत्येव ।

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं दत्त्वा त्रिरात्रमशुचिर्भवेत् ॥

इति मनूक्तेः । आदिष्टी ब्रह्मचारी ।

'अथवा आदिष्टी प्रक्रान्तप्रायश्चित्तः कथ्यते । तस्यैवायमुदकदानादिनिषेधः प्रायश्चित्तसमाप्त्युत्तरमुदकदानादिविधिश्च' इति व्याख्यान्तरं कृष्णभट्टीये ।

कृतजीवच्छ्राद्धेन किमप्याशौचं न कार्यमिति हेमाद्रिः ।

नित्यं नैमित्तिकं कार्यं कुर्याद्वा सन्त्यजेत वा ।
बान्धवेऽपि मृते तस्य नैवाशौचं विधीयते ॥
सूतकं च न सन्देहः स्नानमात्रेण शुद्ध्यति ।

इति लैङ्गोक्तेः ।

'सद्यः शौचं समाख्यातं दुर्भिक्षे चाप्युपद्रवे ।
डिम्बाहवहतानां च विद्युता पार्थिवैर्द्विजैः ॥

इति शुद्धितत्त्वे कौर्मोक्तेः,

उपसर्गमृते चैव सद्यः शौचं विधीयते ।

इति पराशरोक्तेश्च अत्यन्तमरके सद्यःशौचम्' इति शूलपाण्यनिरुद्धभट्टादयः । उपद्रवोऽत्यन्तमरक इति कमलाकरः । उपसर्गोऽत्यन्तमरक इति शूलपाणिः । उपसर्गो विस्फोटादि-

रिति सिन्धुव्याख्यायां कृष्णभट्टः ।

'आपद्यपि च कष्टायां सद्यः शौचं विधीयते ।

इति याज्ञवल्क्यवचनान्मरणसमयेऽपि नाशौचम् । तेन मुमूर्षोः दानसङ्कल्पादि न दोषाय । सति वैराग्ये सन्न्यासोऽप्यातुरस्य भवति' इति केचित् ।

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

इति वचनादारब्धेषु व्रतादिषु नाशौचम् ।

प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥

इति लक्षितः प्रारम्भः । पाकपरिक्रियेत्यस्य पाकप्रोक्षणमित्यर्थ इति शुद्धिदीपः । तन्नेति कमलाकरः ।

'अत्र तत्तत्कर्मण्येवाशौचानिवृत्तिः । तेन कर्मान्तरेऽनधिकारो व्यवहारे चास्पृश्यत्वमस्त्येव' इति शुद्धिविवेकादौ स्पष्टम् ।

पतितानां मरणे सद्यःशौचम् ।

हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम् ।

इति याज्ञवल्क्यवचनात् । आत्मघातिग्रहणं पतितमात्रोपलक्षणार्थम् ।

यतिमरणे त्वाशौचं नास्ति ।

त्रयाणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः ।
यतेः किञ्चिन्न कर्तव्यं नचान्येषां करोति सः ॥

इति ब्राह्मात् ।

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च ।
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥

इति स्मृतेश्च ।

एवं कृतजीवच्छ्राद्धे मृते सपिण्डैराशौचादि कार्यं न वा।
मृते कुर्यान्न कुर्याद्वा जीवन्मुक्तो यतः स्वयम्।
कालं गते द्विजो भूमौ खनेद्वाऽपि दहेत वा॥
पुत्रकृत्यमशेषं च कृत्वा दोषो न विद्यते।
इति हेमाद्रौ लैङ्गोक्तेः।

हीनवर्णासु परपूर्वासु स्त्रीषु तदुत्पन्नेषु पुत्रेषु च आशौचं नास्ति।

परपूर्वासु च स्त्रीषु पुत्रेषु कृतकेषु च।
नानध्यायो भवेत्तत्र नाशौचं नोदकक्रिया॥
इति शङ्खोक्तेः।

एवं हीनवर्णे गतासु स्वभार्यास्वपि नाशौचम्।
पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः।
सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः॥
इति याज्ञवल्क्योक्तेः।

सवर्णासु तु परपूर्वासु तदपत्येषु च—
अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च।
परपूर्वासु च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यते॥
इति शङ्खोक्तेः भर्तृपित्रोस्त्रिरात्रम्।
सपिण्डानां तु एकाहः।

सूतके मृतके चैव त्रिरात्रं परपूर्वयोः।
एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः॥
इति मरीच्युक्तेः।

पूर्वापरभर्त्रुत्पन्नयोः पुत्रयोस्तु परस्परं जनने एकरात्रम्, मरणे त्रिरात्रम्।

मातुरैक्याद् द्विपितृकौ भ्रातरावन्यगोत्रजौ।
एकाहं सूतकं तत्र त्रिरात्रं मृतकं तयोः॥
इति मरीच्युक्तेः इति दिक्।

इति संक्षेपेणाशौचकालनिर्णयः।

---

बाणाष्टनवभूवर्षे(१९८५) कार्तिके शुक्लपक्षके।
एकादश्यां भृगौ पूर्तिमगाद्देषोऽन्त्यदीपकः॥

इति श्रीनित्यानन्दपर्वतीयविरचितः आशौचकाल-
निर्णयसहितः अन्त्यकर्मदीपकः समाप्तः।

शुभम्।



॥ श्रीः ॥

# शुद्धिपत्रम् ।



| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| विश्वस्याद्य | विश्वस्याद्य | ६ | १७ |
| कुम्मै | कुम्भै | ९ | १३ |
| हति | इति | ११ | २३ |
| पश्चाच्चित्यादि | पश्चाच्चित्रादि | २० | १६ |
| न्यास | न्यासः | ,, | २० |
| इत्युरत्र | इत्युत्तरत्र | २४ | १४ |
| नम | नवम | ५० | ९-१० |
| गोत्रायाः प्रेतायाः | गोत्रायै प्रेतायै | ६७ | ६ |
| एष मया | वृष एष मया | ,, | ७ |
| हेम्याद्रि | हेमाद्र्यादि | ७० | २१ |
| एषोऽन्नपिण्डो | एषपिण्डो | ७३ | ८ |
| ,, | ,, | ७८ | १ |
| समिधमिहि | समिधीमहि | ८८ | ७ |
| प्रादसिण्य | प्रादक्षिण्य | १०४ | २० |
| सन्तुशिवा | सन्तुशिवाआप | १०७ | १२ |
| स्वस्त्वि | स्वस्ति | ११६ | २० |
| क्षन्तुमहर्थ | क्षन्तुमर्हथ | ११७ | ९ |
| शर्मशो | शर्मणो | १२६ | १७ |
| दिवोदसीये | दिवोदासीये | १७१ | १५ |
| र्विशति | विंशति | १७५ | १३ |
| दशरात्रादूर्ध्वं | दशरात्रादूर्ध्वं | ,, | १४ |
| मातापित्रोस्तु दशाहोर्ध्वं | मातापित्रोस्तु | १७८ | १३ |
| प्रसवे | पितृगृहे प्रसवे | १८० | ९ |
| सवार्णा | सवर्णा | १९० | १५ |



# काशिसंस्कृतसीरीज़-ग्रन्थमाला ।

इयं काशी-संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते ।

१ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) रु० १—८

२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीका-सहितम् । ( वेदान्तं १ ) रु० ८—०

३ वैशेषिकदर्शनम् । पं० श्रीदुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यांसमन्वितम् (वैशेषिकं१)रु०२—०

४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) रु० ०—६

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावान्तः । ( व्याकरणं १ ) रु० ५—०

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादि-समाप्तिपर्यन्तः । द्वितीय भाग ( व्याकरणं १ ) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुण-निरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रि-कृतव्याख्यासहिता । ( न्यायं १ ) रु० ६—०

७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रि-कासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ )रु० ०—८

८ अलङ्कारप्रदीपः । श्रीविश्वेश्वरपाण्डेयनिर्मितः । (काव्यं १) रु० ०—८

९ अनङ्गरङ्गः । महाकविकल्याणमल्लविरचितः ! (कामशास्त्रं१) रु० ०—१२

१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः। (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । ( कर्मकाण्डम् १) रु० ०—८

१२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-नि-म्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । ( वेदान्तं ३ ) रु० १—४

१४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदासवि० । सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः । ( छंदः १ ) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटि-प्पणा । ( न्यायं २ ) रु० १—०